भवितेति स्मृतिरप्युत्पद्यते यस्मात् तस्या अप्युत्पत्तिर्भावो भविष्यति स्मृतिरप्युत्पन्ना भवितेति । तच्च न विरोधादनभ्युपगमाच्च । यदि स्मृतिव्यतिरिक्तोत्पत्तिर्व्याहतं भवति स्वरूपं च वक्तव्यं न हि भवन्त उत्पत्तिमद्व्यतिरेकेणोत्पत्तिं मन्यन्ते । व्यतिरिक्तां चोत्पत्तिं मन्यमानेन भवता तस्याः स्वरूपं वक्तव्यम् । स्वरूपं च निरूप्यमाणं तन्त्रं बाधते कथमिति उत्पत्तिः स्वकारणसत्तासम्बन्धः सत्ता वा स्वकारण-सम्बन्धविशिष्टा उभयं च तन्त्रेणाभ्युपगतमिति विरोधः । अथ स्मृत्य-व्यतिरिक्तोत्पत्तिपूर्वकं किं च वर्त्तत इति शून्यमभिधानम् । उत्पत्ति-र्भाव उत्पन्नो स्मृतिरिति यदा चोत्पत्तिः स्मृतेर्भावत्वेन विवक्षिता भवति तदैवं वक्तुं न्याय्यम् यदा तु स्मृतिर्भावस्तदा भविता भवि-तव्यम् कस्माद्भावस्य भवित्रपेक्षत्वादित्युक्तम् तस्मात् कथञ्चन भवत्पक्षे स्मृतिः सम्भवतीति स्मृतिमन्तरेण न प्रतिसन्धानमस्तीति अस्ति चेदं प्रतिसन्धानं तस्माद्यत्कर्त्तृकमेतत्सोऽर्थान्य एक आत्मेति । अथवान्यये-नान्यः सूत्रार्थोऽभिधीयत इति देवदत्तस्य रूपरसस्पर्शप्रत्ययाः एका-नेकनिमित्तकाः स्मृत्या सह ममेति प्रतिसन्धानात् कृतसङ्केतानां बहूनामेकस्मिन् नर्त्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवत् यथा नाना-कर्त्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यै-कत्वात् प्रतिसन्धीयन्ते तथेहापि नानाविषया निमित्तस्य एकत्वात् प्रतिसन्धास्यन्ते यन्निमित्तं स आत्मेति । अथवेच्छाद्वेषप्रयत्नसुख-दुःखज्ञानान्यात्मनो लिङ्गमित्यन्यथा वर्णयन्ति । गुणा इच्छादयः गुणाः परतन्त्रा भवन्तीति न्यायः गुणत्वं पारिशेष्यात् न सामान्य-विशेषसमवाया अनित्यत्वात् । न द्रव्यं कर्म वा व्यापकद्रव्यसमवायात्

अर्थवदित्यादिसामान्यतोदृष्टमित्येतस्मिन्ननुमानं व्यवस्थितम्। एतेनानित्यत्वात् पारतन्त्र्यमिच्छादीनां कार्यत्वाच्च रूपादिवदित्युक्तम्। अयावद्द्रव्यभावित्वेन शरीरे गुणत्वप्रतिषेधः तत्प्रतिषेधाच्चात्मगुणत्वमिति परिशेषात् सिद्ध आत्मेति ॥

## चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

चेष्टेन्द्रियार्थाश्रयः शरीरमिति। का पुनरियं चेष्टा हिताहितप्राप्तिपरीहारार्थः स्पन्दः। सुखसाधनोपलब्धौ तदीप्साप्रयुक्तस्य यः परिस्पन्दः सा चेष्टेति गम्यते। एवं दुःखसाधनोपलब्धौ तज्जिहासानुष्ठानलक्षणः परिस्पन्द इति। कथमिन्द्रियाणां शरीरमाश्रयः स्वकारणवृत्तित्वादवृत्तित्वाच्च यानि तावत्कार्याणीन्द्रियाणि तानि स्वकारणवृत्तीनि यदकार्यं तदवृत्ति घ्राणादीनि त्वक्पर्यन्तानि कार्याणि श्रोत्रमनसी त्वकार्ये न च घ्राणादिमनःपर्यन्तमिन्द्रियं शरीरवृत्ति तस्मादयुक्तमिन्द्रियाश्रयः शरीरमिति। शरीरानुविधानमिन्द्रियाश्रयत्वं ब्रूमः न पुनराधाराधेयभावेनेन्द्रियाणि शरीरे वर्तन्त इति। अपि तु शरीरस्योपघातानुविधानमिन्द्रियाश्रयत्वस्यार्थः शरीरानुग्रहेणानुगृह्यन्ते तदुपघाते चोपहन्यन्ते इत्ययमाश्रयार्थः तस्मादयथार्थं आक्षेप इति। एतेनार्थानामाश्रयार्थं उक्तो वेदितव्यः किं कारणं न हि गन्धादयोऽर्थाः शरीरवृत्तयः यत्तु तेषां कार्यं सुखदुःखोपलब्धिनिमित्तत्वं तच्चासतिशरीरे भवतीति शरीराश्रया उच्यन्ते। यथा ग्रामीणा ग्रामसमाश्रिता इति। कथं पुनरेते चेष्टादयः सामान्यशब्दाः सन्तो विशेषवृत्तयो भवन्तीति सामान्यशब्दानामपि विशेषवृत्तित्वं सामार्थ्यात् सामर्थ्यं प्रकरणादि ब्राह्मणान् भो-

अर्थेति। यथाऽशेषब्राह्मणभोजनस्याशक्यत्वात् विशेषेण सन्निधीयमानं प्रकरणापन्नं ब्राह्मणविशेषमाह। एवं चेष्टादिशब्दानामपि सामर्थ्यादिशेषेऽवस्थानम्। सामर्थ्यं च लोकतस्तदधिगतिः प्रमाणासम्भवो वा लोकतस्तावत् चेष्टाशब्दं न क्रियामात्रे प्रयुञ्जते किन्तु विशेष इति यथा स्पन्दते सर्पति धावतीति यथैते स्पन्दादिशब्दाः क्रियावाचकाः सन्तः क्रियाविशेषेष्ववतिष्ठन्ते तथा चायं चेष्टाशब्दः सामान्यवाच्यपि प्रमाणासम्भवात् क्रियाविशेषे वर्तते न क्रियामात्राधारस्य शरीरव्यक्तिहेतुत्वं सम्भवतीति। एवं च घटादिष्वप्रसङ्गः यैरप्यपाण्यादिपदप्रयोगे घटादिष्वप्रसङ्ग इति देश्यं क्रियते तदप्यनेन व्याख्यानेन प्रत्युक्तम्। सति तु प्रसङ्गे समस्तपदप्रयोगेऽपि न परमाणुषु प्रसङ्गो वार्यत इति। यथा त्वस्माभिर्वर्णितं तथा न कचिदपि शरीरादन्यत्र वर्तत इति॥

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः॥१२॥**

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रम्। लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानि सर्वाणीति सूत्रार्थो द्रष्टव्यः। उद्देशसामान्यालक्षणाभिधानं नामधेयेन पदार्थाभिधानमात्रमुद्देश इत्युद्देशलक्षणमुक्तं इदं च तथाभूतं तस्मादलक्षणमिति। नेदं तथा करणभावात् स्वविषयग्रहणलक्षणत्वमिन्द्रियाणां करणस्वभावकानीन्द्रियाणीति तेषामतीन्द्रियाणामिन्द्रियाणां यत् स्वविषयग्रहणं तेन लक्ष्यन्त इति स्वविषयग्रहणलक्षणत्वं वेदितव्यम्। असाधारणत्वादिति। भूतेभ्य इति पृथिव्यादिकारणोपदेशो नियमार्थः। कः पुनरयं नियमः भूतगुणविशेषग्रहणसाधनत्वं न सर्वमिन्द्रियं

सर्वभूतगुणविशेषं गृह्णातीति अपि तु यज्जातीयमिन्द्रियं भवति तस्य यो गुणविशेष इतरेतरभूतव्यवच्छेदहेतुर्गन्धादिः स तेनैवेन्द्रियेण गृह्यत इत्ययं नियमः ऐकात्म्ये पुनरयं नियमो न स्यात्। यदि पुनरिन्द्रियाण्येकात्मकानि एककारणकानि स्युः कारणस्वभावानुविधानादैकात्म्याद्विषयव्यवस्था न स्यात् सर्वं सर्वार्थमेकं वा सर्वार्थमिति स्यात् एककारणानामपि स्वभावभेदो रूपादिवदिति चेत्। अथ मन्येथाः दृष्ट एककारणानां पाकजरूपादीनां स्वभावभेदः कतमत् पुनरेकं कारणं रूपादीनां अग्निसंयोग इति न सिद्धान्तापरिज्ञानात् न ब्रूमोऽग्निसंयोगादेकस्माद्रूपादय इति अपि तु पूर्वरूपादिविशेषापेक्षात् यद्द्रव्यं पच्यतेऽग्निसंयोगेन तस्य ये पूर्वरूपादयस्तेषां यः स्वगतो विशेषस्तमपेक्षमाणोऽग्निसंयोग उत्तरान् रूपादीन् विशिष्टानारभते। एवं च कृत्वा परमाणोः पक्वतरतमादिभेदः तस्मान्नैककारणपूर्वका रूपादय इति न किञ्चिदप्येककारणकं कार्यं दृष्टमिति। सर्वं हि कार्यं प्रादुर्भवत् समवाय्यसमवायिनिमित्तकारणेभ्यो भवतीति। एकं कर्म संयोगविभागकारणं दृष्टमिति चेत् नानभ्युपगमात् स्यान्मतिर्ननु च दृष्टं कर्म संयोगविभागकारणकमिति नानभ्युपगमात् नैतदभ्युपगच्छामो निरपेक्षं कर्म संयोगविभागयोः कारणमिति। यदि तर्हि कर्मापि सापेक्षं संयोगविभागौ करोति कर्मलक्षणहानिः यन्निरपेक्षं संयोगविभागकारणं तत्कर्मेत्युक्तं तद्धीयेत लक्षणहानेश्च न कर्म ततश्च संयोगविभागौ न कर्मपूर्वकाविति। नैष दोषः न ब्रूमो निरपेक्षं कर्म कारणमिति न किञ्चिदपेक्षत इति अपि तु चरमभाविनिमित्तान्तरं नापेक्षत

इत्ययं निरपेक्षार्थः। यथा द्रव्यजातं समानजातीयद्रव्यसंयोगं च चरम-भाविनमपेक्षमाणं द्रव्यमारभते नैवं कर्मजातीयं पश्चाद्भाविनिमित्त-मपेक्षते अपि तु कर्म सत्संयोगविभागावारभते तस्मान्न कर्मलक्षण-हानिः न चैकपूर्वकत्वं संयोगविभागयोरिति॥

# पृथिव्यापस्तेजो वायुराकाशमिति भूतानि॥ १३॥

# गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः॥ १४॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतत्सूत्रम्। पृथिव्यादिगुणा इत्येतस्मिन् पदे ऽनेकः समासः सम्भवति। कथमिति। पृथिव्यादीनां गुणा इति षष्ठीसमासः। पृथिव्यादीनि च गुणाश्चेति द्वन्द्वः। पृथिव्यादयो गुणा येषामिति बहुव्रीहिः। एवमनेकसमासोप-पत्तेः संशयः। किमत्र तत्त्वमिति। द्वन्द्वः समास इति तत्त्वम्। षष्ठी-समासस्तावन्न पृथिव्यादीनामनिन्द्रियार्थत्वप्रसङ्गात्। यदि पृथिव्या-दीनां गुणा इति षष्ठीसमासः स्यात् पृथिव्यादीनां गन्धादिगुण-विशेषणत्वेनोपयुक्तानामिन्द्रियार्थत्वं न स्यात् विशेषणवैयर्थ्यं च स्यादिति। गन्धरसरूपस्पर्शशब्दा इत्युक्ते पृथिव्यादिगुणा गम्यन्ते ततश्च पृथिव्यादिग्रहणं व्यर्थम्। न हि गन्धादीनां द्रव्यान्तरमस्ति पृथिव्यादिगुणत्वं चान्यगुणत्वं च यतो(१) विशेषणमर्थवत् स्यात् तस्मान्न षष्ठीसमासः। गुणिनामविद्धेर्न बहुव्रीहिः पृथिव्यादयो गुणा येषां के ते गुणिनो येषां पृथिव्यादयो गुणाः न च पृथिव्यादीनां गुणत्वं शक्यं प्रतिपादयितुम् न चान्यथा बहुव्रीहिः प्रायेणायं समानाधिकरणपूर्वो भवति यथा चित्रगुरिति गोमत्तायां प्रसिद्धायां चित्रगुणसम्बन्धे

(१) यतो—पा॰ २ पु॰॥

सुप्रसिद्धे गवां चित्रगुरिति बहुव्रीहिः न पुनरिह गुणी प्रसिद्धः।
नापि पृथिव्यादीनां गुणत्वं प्रसिद्धम्। विशेषणत्वाद्गुणाः पृथिव्यादय
इति स्यात्। तन्न। सर्वो गुण एव स्यादेतस्यां कल्पनायां न हि
कस्यचित् कश्चित् विशेषणं विशेष्यो वा न भवतीति सर्वगुणत्वप्रसङ्गः
तस्माद्बहुव्रीहिरपि न। उभयसमासप्रतिषेधादन्यसमासाभावाच्च द्वन्द्वः।
यस्मात् षष्ठीतत्पुरुषबहुव्रीही प्रतिषिद्धौ समासान्तरं च न सम्भ-
वतीति क्रियमाणश्च द्वन्द्वः तस्माद्द्वन्द्वः समास इति। न द्वन्द्वः समासः
शास्त्रयुक्त्योरभावात् यद्ययं द्वन्द्वो भवति शास्त्रं युक्तिर्वा पृथिव्या-
दीनामिन्द्रियार्थत्वे वक्तव्ये इति। न। उभयस्याप्युपपत्तेरिति।
उभयं पृथिव्यादीनां इन्द्रियार्थत्वे शास्त्रं युक्तिश्च सम्भवति। शास्त्रं
तावत् दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति। युक्तिरपि दर्शनस्पर्शनयो-
रेकविषयत्वेन प्रतिसन्धानं यमहमद्राक्षं तं स्पृशामीति दृष्टिस्पर्शन-
विषया युक्तिः। शास्त्रमप्यस्मिन् पक्षे सम्भवतीति ऐन्द्रियकत्वाभि-
धानाच्च सामान्यस्येति तस्मात् सिद्धं पृथिव्यादीनि च गुणाश्चेति
द्वन्द्वः समास इति। पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकरण-
ग्राह्याण्युपदिश्यन्ते गुणग्रहणेन च सर्व आश्रितो गुण इति संख्या-
परिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगकर्मसामान्यविशेषा अ-
नाश्रितश्च समवायस्तद्धर्मत्वाद्गुण इति। गन्धरसरूपस्पर्शशब्दास्तर्हि
पृथक्त्वेन वक्तव्याः गुणग्रहणेन ग्रहणात्। पृथिव्यादिगुणास्तदर्था इति
सूत्रे वक्तव्यम्। लघु चैवं भवतीति स एवार्थः सेत्स्यतीति न
कर्तव्यम्। गन्धरसरूपस्पर्शशब्दानां पृथगभिधानमिन्द्रियविशेषनिय-
मज्ञापनार्थम्। इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु

नियतानि अन्यथानियतानि। तत्र पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि शेषस्तु गुणराशिः सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये समवायोऽभावश्च। तथा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतदनुब्रुवाणः पर आह। स्पर्शग्रहणमेव स्पर्शनेन रूपग्रहणमेव चक्षुषेति। स पर्यनुयोज्यः। अथ रूपस्पर्शौ चक्षुःस्पर्शनाभ्यां गृह्येते इति कथमवगम्यते। यस्माच्चक्षुःस्पर्शनाभ्यां तद्विशिष्टः प्रत्ययो भवति। अनास्पदस्तर्हि प्रतिषेधः घटादावपि तद्विशिष्टप्रत्ययदर्शनात् घटादिकमप्यर्थं दर्शनस्पर्शनाभ्यामुपलभमानस्य तद्विशिष्टं घटादिकमर्थं प्रतिपद्यते। तस्मादसम्प्रधारितः प्रतिषेध इति। रूपादिभ्यस्तथासन्निविष्टेभ्यो घटादिप्रत्यय इति चेत् यदिदं भवतापदिश्यते दर्शनस्पर्शनाभ्यामयं घटं प्रतिपद्यत इति। मिथ्यैतत् रूपादय एव तेन तेनाकारेण सन्निविशन्ते तानयमुपलभ्य तथाकारान् प्रतिपद्यमानो घट इति प्रपद्यते न पुना रूपादिव्यतिरिक्ता घटादय इति नाकारार्थानभिधानात् अतथाभूतस्य तथाभूतेन सामान्यमाकारशब्दस्याभिधेयम्। तद्यथा स्थाण्वाकारः पुमानित्यपुरुषस्य स्थाणोराकारः पुरुषेण यत् सामान्यं स आकारशब्दस्यार्थः स्थाणुपुरुषप्रसिद्धौ सत्यां भवतीति। न पुनर्भवतां घटाकारा रूपादय इति रूपादिषु घटाकारवीजं किञ्चिदस्ति। तस्मात् घटाकारा रूपादय इति यत् किञ्चिदेतदिति। रूपादिमात्रे च घटादिष्वभावः यस्य रूपादिमात्रं घटादयः तस्य तेषां समानत्वात् याता मातुर्व्यो विविक्ता गौरश्वो घट इति तानवाप्नुवन्ति रूपादिगतस्य बुद्धिनियामकस्य विशेषस्य हेतोरभावात्। संस्थानभेदोऽर्थभेदप्रत्यय इति चेत् केनचित् संस्थानविशेषेणा-

वतिष्ठमाना रूपादयः संस्थानभेदानुविधानाद् घटादिबुद्धिहेतवो भवन्तीति नैतदस्ति संस्थानस्यानन्यत्वे संज्ञाभेदमात्रत्वात् व्यर्थाभिधानप्रसङ्गाच्च यदि संस्थानं रूपादिभ्योऽन्यद्द्रव्यम् तदिति संज्ञाभेदमात्रम् अथानन्यस्तथापि रूपादीनां संस्थानभेदानुविधानात् घटादिप्रत्यया इति व्यर्थमभिधानम्। घटादिप्रत्यया मिथ्याप्रत्यया इति चेत् स न मन्येत घटादिप्रत्ययाः सम्यक्प्रत्यया इति। किन्तु अन्वयवासनावशान्मिथ्याप्रत्यया भवन्तीति। तदयुक्तम्। मिथ्याप्रत्ययानां सम्यक्प्रत्ययानुकारित्वात् यत्र ते मिथ्याप्रत्यया लोके भवन्ति सर्वत्र ते सम्यक्प्रत्ययानुकारिणो भवन्ति न पुनर्घटादिप्रत्ययानां मिथ्याप्रत्ययत्वेन कल्पितानां बीजमस्ति न चैते निर्बीजाः प्रादुर्भवन्ति तस्मान्न मिथ्याप्रत्यया इति। मिथ्याप्रत्ययास्त्वेत इत्यव्यतिरेके प्रमाणोपपत्तौ सत्यां सिद्ध्यति न चाव्यतिरेकप्रतिपादकं प्रमाणमस्ति। न नास्ति तदग्रहे तद्बुद्ध्यभावात् यद्यस्मादनर्थान्तरं भवति तदग्रहे तस्याग्रहो दृष्टः तथा यूषस्य पक्तेश्च। यच्च यतोऽर्थान्तरं भवति तदग्रहे तस्य ग्रहो दृष्टः तद्यथा रूपाद्यग्रहे वायुग्रह (?) इति। नायं हेतुरनैकान्तिकत्वात् ये घटादिभावमापन्नाः पृथिव्यादयस्तेषां पृथिव्यां संस्थ्यमानायामर्थान्तरभूतानामवादीनामग्रहणम्। अथ चार्थान्तरभूताऽबादयो न दर्शनविषयभाजो भवन्ति तस्मादनेकान्तः अथ न चत्वारि महाभूतानि तथा सन्निविष्टानीति पक्षस्तथापि रूपं चत्वारि महाभूतानीति वचनं व्याहन्यते अथ ब्रूषे नैव नो रूपादिव्यतिरिक्ताः पृथिव्यादय इति तथाप्यस्य वाक्यस्यायमर्थो भवति रूपादयो रूपमिति ततश्च कामेऽष्टद्रव्यकोऽणुरिति व्याहन्येत अथ पृथिव्यादीनां

संघातमात्रे रूपादिव्यवहारः तथापि न रूपं पृथिव्यादयो वस्तुतः सन्ति। कथमिति। पृथिव्यादीनां संघातो रूपं पृथिव्यादयश्च रूपादिसंघात इति संहन्यमानस्याभावान्न संघातोऽस्ति सर्वः संघातः संहन्यमानतन्त्रो दृष्ट इति सर्वथा न व्याघातान्मुच्यते तदग्रहे तद्बुद्ध्यभावादिति तच्छब्दार्थानुसृतावसम्बद्धार्थम्। यदा तच्छब्दस्यार्थोऽनुस्रियते तदा तदग्रहे तस्यैवाग्रह इति प्राप्तम्। तथासम्बद्धार्थं यदा पृथिव्यादि रूपादिविशेषणं साध्यते तदा तदग्रहे तद्बुद्ध्यभावादित्यस्य हेतोः पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति किं कारणं पृथिव्यादिविशेषणानां रूपादीनां तच्छब्देनानभिसम्बन्धात्। एतेन पृथिव्यादिविशेषणा रूपादयः प्रत्युक्ताः। अत्रापि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति। तच्छब्दस्य प्रधानसम्बन्धित्वात्। एवं रूपादिमात्रं पृथिवी पृथिवीमात्रं रूपादय इति पृथिव्येव रूपादयो रूपादय एव पृथिवीति पूर्ववत् प्रसङ्गः। सर्वत्र प्रतिज्ञापदयोर्व्याघातो वचनभेदात् पृथिवीत्येकवचनं रूपादय इति बहुवचनं वचनभेदानुविधानं च यत्र तत्रार्थभेदः। तद्यथा गावश्चापि ग्रामीति। अस्ति चात्रापि वचनभेदः तस्मादत्राप्यर्थभेदेन भवितव्यं नन्वेकस्मिन्नर्थे वचनभेदो दृष्टस्तद्यथा चत्वार आश्रमाश्चातुराश्रम्यमिति। तन्नानभ्युपगमात्। नायं वचनभेदः क्वचिदेकत्वे दृष्टः चातुराश्रम्यमिति चतुर्णामाश्रमाणां समानं धर्मसाधनत्वमभिधीयते। एतेन षडेव गुणाः चातुर्गुण्यं विशेष एव वैशेषिकमिति प्रत्युक्तम्। तदग्रहे तद्बुद्ध्यभावादिति चासिद्धोऽयं हेतुः कथमसिद्धः रूपाद्यग्रहे द्रव्यग्रहात् यस्मान्नीलाद्युपधानभेदानुविधायिनः स्फटिकमणे

रूपानुपलब्धौ स्फटिक इति प्रत्ययो दृष्टः योऽयं दृष्टान्तो यूथवत् पङ्क्तिवच्चेति तत्र भवता यूथो व्याख्यायि न पङ्क्तिः। यूथो हि नाम उत्पन्नपाकजानां द्रव्याणां कालविशेषानुग्रहे सति द्रव्यान्तरसंसृष्टानां पाकजोत्पत्तौ यः संयोगः स यूथ इति स चार्थान्तरवदित्यसिद्धो दृष्टान्तः। एतेन पाककाञ्जिकविवेकावचारादयः प्रत्युक्ताः। पङ्क्तिरप्येकदिग्देशसम्बन्धिषु परापरप्रत्यासत्त्यनुगृहीतेषु वधारितानवधारितेयत्तेषु भिन्नाभिन्नजातीयेष्वाधारेषु वर्तमाना बहुत्वसंख्यैवोच्यते। एवमनियतदिग्देशसम्बन्धिषु गजतुरगस्यन्दनेषु परप्रत्यासत्त्युपगृहीतेषु वधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसंख्यैव सेनेत्युच्यते। एवं जातिविशिष्टपुरुषोपग्रहेण वर्तमाना परिषत् प्रव्रजितविशेषोपग्रहेण वर्तमाना सङ्घः। एवं यथासम्भवं पूगवनयूथब्राह्मणगणशब्दा अपि द्रष्टव्याः। एवमनियतदिग्देशसम्बन्धिष्वनाद्यन्तेषु मध्यशून्येषु वर्तमाना कुण्डलकं बहुत्वसंख्यैवेति। तस्मात् पङ्क्तिरनर्थान्तरमित्यसिद्धो दृष्टान्तः। अथार्थान्तरे किं प्रमाणमिति उपलभ्यस्य समस्तैरुपलभ्यैर्व्यपदेशः यदिदं चन्दनमुपलभ्यते तस्य श्वेतं रूपं तिक्तो रसः पटुर्गन्धः शीतः स्पर्श इति। यस्यायं प्रत्यक्षस्य प्रत्यक्षेण व्यपदेशः सोऽर्थान्तरे दृष्टो यथा ब्राह्मणस्य कमण्डलुरिति। न खल्वेवं प्रतिपद्यते यदिदं श्वेतं रूपं तदनुमीयमानरसगन्धस्पर्शानामिति। सेनावनादिभिरनेकान्त इति चेत् अथापि स्याद्बुद्धिः दृष्टोऽनर्थान्तरेऽपि व्यपदेशः सेनाया हस्ती काननस्य वृक्ष इति नासिद्धत्वात् असिद्धमेतत् अनर्थान्तरत्वं सेनायाः काननस्य च यथा च तदर्थान्तरं सेना वनं वा तदुक्तमिति तदसत्त्वमिति चेत् अथाप्येवं

कथ्येत संख्यैव तावन्नास्ति कुतोऽर्थान्तरभाव इति। नैव संख्या नास्तीति ब्रुवता एकानेकप्रत्ययानां विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम्। कस्मात् एकानेकप्रत्ययानामप्रत्याख्येयत्वात् विशिष्टाश्च प्रत्यया भवन्तो न निमित्तप्रत्याख्यानेन भवितुमर्हन्ति किं कारणम् कुम्भप्रत्ययान्यनिमित्तक एकानेकप्रत्ययः कुम्भप्रत्ययविलक्षणत्वात् नीलप्रत्ययवत् तस्माद्यत्तत्प्रत्ययनिमित्तं सा संख्येति। तत् प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेण ततोऽन्यस्य तद्विशिष्टप्रत्ययस्योत्पत्तौ निमित्तान्तराकाङ्क्षित्वात् यः प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेण प्रत्ययो भवति तस्य निमित्तान्तरकाङ्क्षित्वं दृष्टम्। तद्यथा वस्त्रचर्मकम्बलेषु वस्त्रचर्मकम्बलप्रत्ययास्तएव भवन्ति तेषु तु योऽन्यो नीलमिति प्रत्ययः स निमित्तान्तरोद्भवन् दृष्टः तथा च घटादिष्वपि घटाविषयनिमित्तव्यतिरेकभाक् तत्र कादिप्रत्ययाः तस्मात्तैरपि निमित्तान्तराद्भवितव्यम्। यन्निमित्तं ते संख्यादय इति। महत्पुष्पितशब्दाभ्यां सामानाधिकरण्यान्न संख्या सेना वनं वा भवितुमर्हति। यदि संख्या सेना वनं वा महती सेना पुष्पितं वनं प्राप्नोति न संख्याया महत्त्वमस्ति न पुष्पयोग इति नैषदोषः। महती सेनेति किमुच्यते तानेव गजादीन् संख्यानवधारितावधारितेयत्ताग् स्थान्यङ्गान्तरोपपद्य[१] सति महती सेनेत्यपदिशन्ति। तथेयं संख्यानिषु महच्छब्दवाच्यत्वपदार्थोपकरणात् बहुत्वसंख्या महतीत्युच्यते। पुष्पितमित्यत्रापि पुष्पसम्बन्धिषु वृक्षेषु पुष्पसम्बन्धेनैका-

---

(१) संख्याधारानवधारितावधारितेयत्ताग् स्थादिष्वङ्गान्तरोपपत्ते—पा० १पु० स पाठः॥

र्थसमवायमनुभवन्ती वस्तुत्वसंख्यैवाभिधीयते। यथा मधुरो रसः। तिक्तो गुडस्येति। अत एव व्यपदेशात् संख्यादीनामप्यर्थान्तरभावः। अस्ति दर्शनाच्च हेतुः यथा गर्त्तश्छिद्रमिति नापरिज्ञानात् गर्त्तो हि नाम रूपादिमद्भिः सावयवारम्भकार्यैर्मध्यशून्यैः संस्थानविशेषोपहितमाकाशमिति। एतेन छिद्रं व्याख्यातम्। एकस्मिन्नपि दर्शनात् व्यपदेशादर्थान्तराभावो न युक्तः। तद्यथा खदिरस्य स्थाणुरिति। वस्तुषु वाऽसंयुक्तेषु दर्शनात् तद्यथा प्रासादानां मालेति। संयुक्तेषु वाऽसजातीयेषु दर्शनात् रूपताम्बुदकतेजांसि (?) विवेक इति यत्तावदेकस्मिन्नपि दर्शनादिति। तदयुक्तम्। खदिरशब्दस्य जातिविशिष्टद्रव्यवाचित्वात् खदिरशब्देन जातिविशिष्टं द्रव्यमुच्यते स्थाणुशब्देनापि संस्थानविशेषोऽभिधीयते संस्थानविशेषस्य प्रचयाख्यः संयोगः स चार्थान्तरमिति। एतेन सर्प्पकुण्डलकं प्रतिमायाः शरीरं सुवर्णस्याङ्गुरीयकं शिलापुत्रकस्य शरीरमित्यादिकं भेदवाचकमित्युक्तं भवति। प्रासादानां माला पङ्क्तिवद्द्रष्टव्या संयोगे विवेक इत्युक्तमेतत् गुणसमुदायव्यतिरेकेणाग्रहणादिति चेत्। अथानुमन्येथाः यदि रूपादिव्यतिरिक्तं द्रव्यं स्यात् तद्रूपादीनन्तरेण पृथगुपलभ्येत न तूपलभ्यते तस्मान्नास्ति अग्रहणस्य द्विनिमित्तत्वादनैकान्तः किमिदमग्रहणं ग्राह्यस्याभावादाहो ग्रहे हेत्वभाव इति सन्दिह्यते। ग्राह्याभावादिति चेत् प्रतिज्ञार्थेन हेत्वर्थस्याभेदादयुक्तो हेतुः ग्रहणाभावादिति चेत् न व्यतिरेकप्रतिषेधः यस्य यद्ग्रहे तद्ग्रहाभावादिति हेतोर्दोषः सोऽस्यापि द्रष्टव्य इति। सोऽयमनन्यत्ववादो यथा यथा विचार्यते तदा तदा स्पष्टमन्यत्वं प्रतिपादयति प्रमाणानामेकत्वोपपत्तेः एकत्व

चानुपपत्तेरिति । तस्माद्व्यवस्थितमेतत् पृथिव्यादीनि गुणाश्चेति द्वन्द्वः समासः ॥

अथ बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रम् ॥

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥**

बुद्धिरुपलब्धिरित्यादि । एतैः पर्यायशब्दैर्योऽभिधीयते पदार्थः स बुद्धिरिति । पर्यायशब्दाः कथं लक्षणम् व्यवच्छेदहेतुत्वात् सर्वं हि लक्षणमितरेतरपदार्थव्यवच्छेदकमेतैश्च पर्यायशब्दैर्नान्यः पदार्थोऽभिधीयत इत्यसाधारणत्वाल्लक्षणम् । उपपत्तिसामर्थ्यात् पर्यायशब्दाभिधानाद्बुद्धिवृत्तेर्निराकरणम् । य आहुः बुद्धेर्ज्ञानं वृत्तिरात्मन उपलब्धिर्वृत्तिरिति । तन्निराकरणार्थं समानार्था एते शब्दा इति बुद्धिवृत्तिः पृथङ्निराकृता भवति । का पुनरत्रोपपत्तिर्भवति आत्मोपलभते बुद्धिर्जानीत इति ब्रुवाणस्तयोश्चैतन्यं प्रतिपद्यते उभयचैतन्ये च प्रत्ययव्यवस्थानुमानं स्यात् । यदि बुद्धिश्चेतना आत्मा चेतनो न बुद्ध्यवसितानर्थानात्मोपलभते किं कारणं चेतनोपलब्धानां चेतनान्तरस्याप्रतिपत्तेः अस्ति च प्रतिपत्तिः तस्मादेकश्चेतन इति बुद्धिवृत्त्यविशिष्टायां ज्ञानवृत्तौ कल्पितायामात्मनः स्वरूपं वक्तव्यम् । बुद्धिरध्यवस्यत्यात्मा चेतयत इति चेत् अथापीदं स्यात् यथा बुद्धिरर्थानध्यवस्यति तथात्माऽधिदेशमधिकाशं चोपलभत इति । अध्यवस्यत्युपलभत इति पर्यायशब्दौ न च पर्यायशब्दैः पदार्थनानात्वं युक्तम् यथा ध्वनिर्नाद इति अन्यथा हि ध्वनिर्नाद इत्यत्रापि नानात्वं स्यात् अथात्मा चेतयते बुद्धिर्ज्ञापयतीति यद्वा बुद्ध्या जानीते पुरुषो न बुद्धिः बुद्धिर्ज्ञापयतीति बुद्धिर्ज्ञानसाधनं भवतीति ॥

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहा इति भाष्यम् । एते स्मृत्यादयो मनसो लिङ्गं भवन्ति । किमेत एव किं तर्हि इदं च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥

## युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

यस्मादिन्द्रियार्थसन्निकर्षेष्वपि युगपज्ज्ञानानि सम्भवन्ति । अतो गम्यते अस्ति तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरमव्यापि यस्य सन्निधानासन्निधानानुविधानात् ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति । कुतः कारणवैकल्ये कार्यप्रतिबन्धादिति सूत्रार्थः । कथं पुनः स्मृत्यादयो मनसो लिङ्गं भवन्त्यत्र वर्तमाना इति । न ब्रूमः स्मृत्यादयो मनोवृत्तित्वान्मनसो लिङ्गं भवन्ति अपि तु गन्धादिक्रियान्यत्वे सति क्रियात्वात् करणान्तरप्रयोजकत्वम् या गन्धादिभ्योऽन्या क्रिया सा करणान्तरप्रयोज्या दृष्टा । यथा रथादिक्रिया । क्रिया चेयं स्मृत्यादिका तस्मादियमपि करणान्तरं प्रयोजयति । सुखादयो रागान्यत्वे सति विषयत्वाच्चक्षुरादिव्यतिरिक्तकरणान्तरप्रयोजिका रथादिवदिति । तद्यथा रथादयो विषयाः चक्षुरादिव्यतिरिक्तं करणं बाह्यं स्यादिति प्रयोजयन्ति विषयाश्च सुखादयः तस्मात्तैरपि करणान्तरं प्रयोजयितव्यम् । अयायुगपज्ज्ञानोत्पत्तिर्ज्ञानधर्मः सा कथं मनोलिङ्गं भवति । अथासम्बद्धमपि लिङ्गमिष्यते सर्वं सर्वस्य लिङ्गं स्यात् अस्यात्मा काकस्य कार्ष्ण्यादित्यपि स्यात् । न त्वेवं भवति । तस्मादसम्बद्धं लिङ्गमिति । असम्बद्धमपि लिङ्गं भवतीत्येके यथा मत्स्यपरावदर्शनं कुलालादन्ति कुलालसद्भावं गमयति आग्निमयक-मदर्शनं चेति । तन्न । नैवात्र कुलालसद्भावो बोद्धव्यः किन्तु देश

एवादूरश्रुतशब्दत्वेन साध्यः तस्य प्रत्ययपरावर्त्तं धर्मः ध्वान्तमपक्र-मेणापि देशोऽविदूरश्रुतशब्दत्वेन साध्यते तस्मान्नासम्बद्धमनुमानं कश्चिदिति। युगपज्ज्ञानानुत्पत्तिस्तर्हि कथं मनसाऽसम्बद्धा मनो-लिङ्गं भवति। युगपज्ज्ञानोत्पत्तेरेव पक्षीकरणान्नासम्बद्धं कथमिति रूपादिग्रहणानि चक्षुरादिव्यतिरेकेणाधिष्ठायकान्तरापेक्षाणि अयु-गपदुत्पत्तेः। तद्यथा अनेकशिल्पपर्यवदातस्यानेकं वास्यादि युगपत् सन्निधानेनोपस्थितं स्वात्मधिष्ठायकापेक्षं न युगपदनेकरथादिक्रियां निर्वर्त्तयति यथा चक्षुरादि न युगपदनेकं ज्ञानं करोति तस्मात्तद-प्यधिष्ठायकान्तरमपेक्षत इतीन्द्रियाणि वा पक्षीकृत्य वक्तव्यम्। कथ-मिति चक्षुरादीन्द्रियं आत्मप्रयुक्तावधिष्ठायकान्तरापेक्षं अयुगपत्प्रवृत्तेः वास्यादिवदिति। यदि तर्हि चक्षुरादीन्द्रियं मनःसन्निधानापेक्षम-र्थानामयुगपद्ग्राहि य एकेन्द्रियग्राह्यास्तेषु कथमयुगपद्ग्रहणं न हि न तत्रासन्निहितं मन इति। सम्बन्धिभेदादिति चेत् युगपत्सम्बन्धिषु कथं भवतु तावन्नीलादिभेदेषु सम्बन्धिभेदादयुगपद्ग्रहणं अथ ये युगपत्सम्बध्यन्ते कथं शुक्लो गौर्गच्छतीति प्रत्यया युगपन्नाभुवन्ति बुभुत्साभेदादयुगपद्ग्रहणमित्येके एके तावद् ब्रुवते सम्बद्धोऽप्यर्थोऽबु-भुत्सितत्वान्न गृह्यत इति। तन्न। मनोवृत्तिप्रसङ्गात् एवं तर्हि मनः परित्याज्यम् यदि बुभुत्साभेदादयुगपद्ग्रहणानि भवन्ति। अन्यथा-बुभुत्साभेदो न इष्टवारित इति मन इदानीमनर्थकं परित्याज्यम्। सत्यां च बुभुत्सायामयुगपद्ग्रहणे न्यायोऽन्योऽवधारणीयः तस्मादन्य-निमित्तमयुगपद्ग्रहणमिति। किं पुनर्निमित्तं करणत्वं यथैवायं करणधर्मो नानधिष्ठितं करणं प्रवर्त्तत इति। तथा सम्बद्धस्याप्य-

नेकक्रियाकारित्वं नास्ति न हि करणं सम्बद्धमपि सदेकदानेकां क्रियां भिन्नां शक्नोति कर्तुम्। यदि पुनरात्मैवाधिष्ठाता भवेत् तथाप्यात्मनो युगपदनेकेन्द्रियसम्बद्धस्याविरोधादयुगपज्ज्ञानोत्पत्तौ न्यायोन्योवधार्यः। स च नान्तरेण मन इति सिद्धं मनः॥

## प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति॥१७॥

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। शरीरेण मनसा वाचा च। सेयं प्रवृत्तिः प्रत्येकं दशविधा पुण्या च पापा च। पुण्या कायेन परित्राणं परिचरणं दानमिति। वाचा सत्यं हितं प्रियं स्वाध्याय इति। मनसा दया स्पृहा श्रद्धा चेति। विपर्ययेण पापा दशविधैव। क्षणिकत्वात् प्रवृत्तेर्जन्मकारणत्वानुपपत्तिः सेयं प्रवृत्तिः क्षणिका च सती न जन्मकारणमिति युक्तम्। ततश्च द्वितीयसूत्रव्याघातः न प्रवृत्तिफले प्रवृत्त्युपचारात्। प्रवृत्तिफलं धर्माधर्मौ धर्मिण (?) सूत्रे प्रवृत्तिरित्युच्यते कस्मात् तत्साधनत्वात् अन्नं वै प्राणिनः प्राणा इति॥

## प्रवर्तनालक्षणा दोषाः॥१८॥

प्रवर्तनालक्षणा दोषाः। का पुनरियं प्रवर्तना ययाऽयमः प्रवर्तते तं प्रवर्तमानं रागादयः[१] प्रवर्तयन्तीति। सेयं प्रवृत्तिहेतुत्वात् प्रवर्तनेत्युच्यते यथा कारणा चारणेति। सा पुनरियं प्रवर्तना कथं गम्यते प्रत्यात्मं प्रत्यक्षा परशरीरे त्वानुमानिकत्वात्मवदिति। यथा-त्माहङ्कारविषयत्वेनावतिष्ठमानः प्रत्यात्मं प्रत्यक्षो भवति। न चैव-महङ्कारबुद्धिरानुमानिकी। नागमिकी। कथं नानुमानिकी लिङ्गा-

(१) चादयः—पा १ पु०। स च प्रामादिकः।

भावात्। कथं नौपदेशिकी अनुपदिष्टार्थप्रतिपत्तेः तस्माद्रूपादिवत् प्रत्यात्ममात्मा प्रत्यक्ष इति। प्रवृत्तिलिङ्गस्त्वनुमेयस्तु परशरीर इति॥

**पुनरुत्पत्तिः प्रेत्यभावः॥ १९॥**

पुनरुत्पत्तिः प्रेत्यभावः। पूर्वोपात्तशरीरादिपरित्यागादन्यशरीरोपसंक्रान्तिः स प्रेत्यभाव इति। पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम्। पुनः पुनर्जन्ममरणे भवत इत्यनादित्वं संसारस्य दर्शयति। कः पुनरयं संसारः दुःखादीनां मिथ्याज्ञानपर्यन्तानामविच्छेदेन कार्यकारणभावः संसार इति। स चानादिः। पूर्वापरकालनियमाभावात्। यदि पूर्वं दुःखं तज्जन्मना विना न युक्तम्। अथ पूर्वं जन्म तदा धर्माधर्मावन्तरेण न युक्तम्। अथ पूर्वं धर्माधर्मौ तावपि विना रागद्वेषाभ्यां न युक्तौ। अथ पूर्वं रागद्वेषौ न मिथ्याज्ञानादृते तयोः प्रादुर्भाव इति। मिथ्याज्ञानं तर्ह्यादिः तदपि शरीरादीनन्तरेण न युक्तम्। सोऽयं दुःखादीनां मिथ्याज्ञानपर्यन्तानां कार्यकारणभावोऽविच्छिन्नः संसार इति। आजवंजवीभाव इति प्रोच्यते। सोऽयं संसारः किमात्मन आहो मनस इति। यदि क्रियामधिकृत्योच्यते तदा मनस एव हि संसरति। अथोपभोगमधिकृत्योच्यते तदात्मनः स हि सुखदुःखे उपभुङ्क्त इति॥

**प्रवृत्तिदोषजनितोऽर्थः फलम्॥ २०॥**

प्रवृत्तिदोषजनितोऽर्थः फलम्। शरीरादिजन्यं सर्वं फलं धर्माधर्मप्रवर्तकत्वात् मुख्यकल्पनायां सुखदुःखोपभोग एव तदवसानात् यथा धर्माधर्मयोः सुखदुःखोपभोग आवसायिकं फलं तथा तु नान्त-

रेण शरीरादीनसमर्थ इति मत्वा शरीरादीनि धर्माधर्मावारभ्य सुखदुःखोपभोगं कुरुत इति। सोऽयं फलशब्दः सुखदुःखोपभोगे मुख्यः शरीरे गौण इति॥

## बाधनालक्षणं दुःखमिति॥ २१॥

बाधनालक्षणं दुःखम्। एतदेव शरीरादि बाधनानुषङ्गाद् दुःखमित्युच्यते। स्वभावतस्तु दुःखमेव दुःखं लक्षणशब्दोऽनुषङ्गार्थः। सर्वमिदं शरीरादि दुःखानुषक्तमिति। अत्र शरीरं दुःखस्य निमित्तं निमित्तार्थोऽनुषङ्गः। इन्द्रियाणि विषया बुद्धय इति साधनं साधनार्थोऽनुषङ्गः। सुखं दुःखाविनाभावि अत्राप्यविनाभावोऽनुषङ्गः। स्वरूपतस्तु दुःखं दुःखमिति। सर्वं स्वरूपतो दुःखमिति केचित्। न प्रत्यक्षविरोधात्। न हि प्रत्यक्षं सुखं शक्यं प्रत्याख्यातुम्। दुःखविकल्प इति चेत् अथापीदं स्यात् दुःखविकल्प एव सुखमिति। न पुनः स्वरूपतोऽस्तीति न विकल्पेन नञ्प्रयोगाभावात्। न विकल्पेन नञ्वर्तमानो दृष्टः न हि ब्राह्मणविशेषे भवत्यब्राह्मण इति। दुःखं दुःखविशेषे ऽदुःखमिति न स्यात्। यदि च सुखं न स्याद्धर्मवैयर्थ्यम्। किं कारणं सुखसाधनं धर्म इति सुखं च नास्तीति व्यर्थो धर्मः दुःखप्रतिषेधः फलमस्येति न युक्तम्। धर्मस्याभावफलत्वप्रसङ्गात् अभावफलो धर्म इति प्रवृत्तिद्वैतं च लोके दृष्टं तन्न स्यात्। हितमाप्स्यामीत्येकः प्रवर्तते। अनिष्टं हास्यामीत्यपरः प्रवर्तते हितस्याभावात् प्रवृत्तिद्वैतं च न स्यात् दुःखभावनोपदेशो न स्यात् प्रतिपक्षाभावात् स ह्यभावः न हि कश्चिद्दुःखे सज्यत इति। तस्मात् सुखः सर्वं दुःखं दुःखभावनोपदेशेन च दुःखमित्युच्यते॥

तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तदत्यन्तविमोक्षोऽपवर्ग इति । तेन शरीरादिना दुःखेनात्यन्तिको वियोग इति । आत्यन्तिकी सुखाभिव्यक्तिरित्येके एके त्वात्यन्तिकीं सुखाभिव्यक्तिं मुक्तिं ब्रुवते । तन्न । प्रमाणासम्भवात् । मुक्तस्यात्मनो नित्यं सुखमिति न प्रमाणमस्ति । न नास्ति नियामकत्वादिति चेत् अनेककारणनिष्पन्नसुखस्यात्मनि समवायो नियामकमन्तरेण न युक्तः तस्मादात्मनि नित्यं सुखमस्ति । येनेदं सुखं निष्पद्यमानमात्मानमाश्रयत इति चेत् न सर्वोत्पत्तिमत्प्रसङ्गात् सुखवदात्मनि दुःखमपि नित्यं कल्पयितव्यं इच्छादयश्चेति । अनैकान्तिकता वा अभिव्यक्त्यर्थानभिधानाच्च । नित्यं सुखमभिव्यज्यत इति कोऽभिव्यक्त्यर्थः ज्ञानमिति चेत् नित्यमनित्यं वेति कल्पनानुपपत्तिः । अनित्यमिति चेत् कारणं वक्तव्यम् । आत्ममनःसंयोगो वा कारणं[1] तस्यापेक्षाकारणं वक्तव्यम् । यदि मन्यसे आत्ममनःसंयोगो ज्ञानस्य कारणं तस्य तदपेक्षाकारणं वक्तव्यम् । न हि द्रव्यगुणकर्मसंस्कारम्भेषु संयोगो निरपेक्षः कारणमिति । आत्ममनःसंयोगः सुखापेक्ष इति चेत् न कैवल्यविरोधात् । अथ मन्यसे आत्ममनःसंयोगो नित्यमात्मनि व्यवस्थितं सुखमपेक्षमाणो ज्ञानकारणं भवतीति तन्न युक्तं कैवल्यविरोधात् । यथायमात्ममनःसंयोगो विषयमात्रमपेक्षमाणो निमित्तान्तरनिरपेक्षः सुखज्ञानं करोति । एवं रूपादीनामपि विषयानपेक्षमाणं तद्विषयाणि ज्ञानानि कुर्यात् । ततश्च कैवल्यं निवर्तते ।

(१) संयोगः कारणं—पा० १पुस्तके स च प्रामादिकः ॥

सर्वानर्थानयमात्मा लभत इति नित्योपलब्धिप्रसङ्गाच्चेति । योगज-धर्मानुगृहीते नित्ये सुखे ज्ञानं करिष्यतीति चेत् न युक्तम् । तत्क्षये तदभावात् यदा योगजो धर्मः क्षीणो भवति तदास्य किमनु-ग्राहकमिति वाच्यम् योगजधर्मो न क्षीयत इति चेत् न युक्तम् । उत्पत्तिधर्मकस्य सर्वस्यानित्यभावात् सर्वमुत्पत्तिधर्मकमनित्यं दृष्ट-मिति । नित्योऽसौ योगसमाधिजो धर्म इति चेत् योगजसमाधिजस्य नित्यस्येति व्याहतं नित्यं ज्ञानमिति चेत् । न । सुखवत् प्रमाणा-भावात् मुक्तसंसारस्थयोरविशेषप्रसङ्गाच्च(१) । सुखदुःखसंवेदनपर्यायश्च न स्यात् नित्यमयं सुखमुपलभेत ततश्च मोक्षार्थः प्रयासो व्यर्थः स्यात् न चायं सुखं जिहासति विवेकज्ञानस्याशक्यत्वात् दुःखं जिहासमानः सुखमपि जिहासति । न चायं कदाचिद्दुःखमुपलभत इति कस्य ज्ञानार्थं प्रवर्तते शरीरादिप्रबन्धादप्रसङ्ग इति चेत् नित्यं सुखमुपलभत इति नास्ति प्रसङ्गः यस्माच्छरीरादयो नित्यसुखस्योप-लब्धेः प्रतिबन्धका भवन्तीति न शरीरादीनामुपभोगार्थत्वात् नित्य-शरीरादिप्रसङ्गाच्च । यथा मुक्तस्य नित्यं सुखं कल्प्यते एवं शरीरादयोऽपि नित्याः कल्पयितव्याः । एवमस्य वैकल्यं साधीयो भवति शरीरादीनां नित्यत्वं दृष्टविरुद्धमशक्यं कल्पयितुमिति चेत् न सुखस्यापि तद्धर्मदादेरदृष्टविरुद्धमनित्यत्वं शक्यं कल्पयितुम् । प्रमाणाभावादित्युक्तम् तच्च नास्ति कस्मात् इष्टार्थाधिगमार्थत्वात् इष्टार्थं लोकः प्रवर्तमान इष्टाधिगमार्थं प्रवर्तते प्रवर्तन्ते च मोक्ष-

(१) 'मुक्तसंसारिणोर्वा' 'मुक्तसंसारवतोः'—पा० १ पु० ।

माणा[1]स्तेषामपीष्टाधिगमार्थया प्रवृत्त्या भवितव्यम् सेयं प्रवृत्ति-र्नित्यसुखे ऽर्थवती नान्यथेति । न । प्रवृत्तिद्वैतदर्शनात् । द्वे प्रवृत्ती लोके दृष्टे इष्टाधिगमार्थानिष्टहानार्था च । तत्रेदं पारिव्राज्यं किमिष्टाधिगमार्थमाहोस्विदनिष्टहानार्थमिति सन्दिह्यते आगमादिति चेत् आगमादेतद्गम्यते मुक्तस्यात्मनो नित्यं सुखमिति मुक्तः सुखी भवतीति श्रूयते । आगमोऽप्येवं विचारणीयः किमयं नित्येन सुखेन योगमाह उत दुःखेनात्यन्तिकवियोगमाहेति । दृष्टश्च दुःखाभावेपि सुखशब्द-प्रयोगो बहुधा लोक इति । एवं च ज्वरादिवियोगे लौकिका व्याचक्षाणा[2] भवन्ति सुखिनः संवृत्ताःस्म इति । यदि पुनरयं मुमुक्षमाणो मोक्षे नित्यं सुखमिति सुखरागेण प्रवर्त्तते न मुच्येत कस्मात् रागस्य बन्धनसमाख्यानात् बन्धनसमाख्यातो राग इति यद्यपि द्वेषात् प्रवर्त्तते दुःखं हास्यामीति तथापि न मुच्येत द्वेषस्य बन्धनसमाख्यानादिति रागद्वेषौ हि बन्धनमिति नाप्रतिकूलत्वात् । अप्रतिकूलं दुःखहानं भवति न पुनरयं दुःखं द्वेष्टि अद्विषंश्चायं प्रवर्त्तमानो-ऽप्रतिकूलं दुःखहानमधिगच्छति । चित्तं विमुच्यत इत्यन्ये रागादीनां तत्र सामर्थ्यात् । यद्रागादिवशं चित्तमात्मनमान्तरगत्यन्तरेषूत्पद्यते न पुनरात्मनि रागादीनां सामर्थ्यमस्ति । न । अयत्ने तत्सिद्धेः । ये चित्तस्यानुत्पादनं निरोधं वापवर्गमिच्छन्ति तेषामयत्ने सिद्धो मोक्षः किं कारणं जन्मनो विनाशार्थत्वात् जातं विनश्यदयत्ने सिद्धं सन्ततेरनुत्पादोऽपवर्ग इति चेत् । न । तस्याशक्यत्वात् । सन्तते-

(१) मोक्षमाणा इति साधुः ।
(२) व्याचक्षमाणाः—पा० १ पु० आमारिका ।

इत्यादौ न शक्यते कर्तुम्। कार्यकारणभावप्रवाहस्य सन्ततिभावात् अनागतानुत्पादः क्रियत इति चेत् अनागतानुत्पादस्य विद्यमानत्वात् किं क्रियत इति सर्वथा न चिन्तस्यापवर्गः सिध्यतीति कस्य तर्ह्यपवर्गः योऽपवक्ष्यते कोऽपवक्ष्यते आत्मा। अथ कापवृक्तिः दुःखादिभिर्वियोग इति॥

प्रमेयानन्तरं प्राप्तिः संशयस्य स्थानवतो लक्षणवचनमिति या प्रमेयानन्तरं क्रमप्राप्तिः साभिधीयते॥

## समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः॥ २३॥

समानानेकधर्मोपपत्तेरिति सूत्रम्। तत्र समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च संशयः। त्रिविध एव संशय इतरपदविशेषणाद् भवतीति सूत्रार्थः। समानधर्मादिभ्य उत्पन्नो विषयस्य विषयस्य विशेषं नावधारयति यः स संशय इत्युच्यते। प्रत्ययो नावधारणात्मकश्चेति व्याहतं प्रत्ययश्चैतत् यदुत विषयावधारणात्मकत्वं न चेदं विषयस्वरूपमवधारयति प्रत्ययत्वं व्याहतं भवति न स्वरूपप्रत्याय-नात् स्वरूपस्य प्रतीयते न पुनरयं विषयस्वरूपमवधारयति, अतस्य संशयः, प्रतीयत इति प्रत्यय उच्यते। समानशब्दः साधारणार्थः समानस्य धर्मोपपत्तेरिति साधारणस्येति यावत्। किं पुनरत्र साधारणं किं गुण आहो सामान्यमिति। यदि गुणः स न साधारणः कस्मात् एकद्रव्यवृत्तित्वात् परिमाणस्य, एकद्रव्यवृत्ति परिमाणं तत् कथं साधारणं भविष्यतीति। सामान्यमपि न युक्तम् द्रव्यावृत्तित्वात्

न ह्यूर्द्ध्वत्वं द्रव्ये वर्त्तते किन्तु गुणे। न ह्यूर्द्ध्वत्वं परिमाणे प्रवर्त्तमानं सामान्यं द्रव्ये संशयं कर्तुमर्हति कस्माद्गुणस्यावधारितत्वात् यद्वृत्ति सामान्यं सोऽवधारित इति न साधारणार्थस्यान्यथाव्याख्यानात्। न ब्रूमो गुणः साधारण इति। नापि सामान्यमपि तु सादृश्यार्थः। यावद्धर्मिणौ पूर्वमद्राक्षं तयोर्यो धर्मः ऊर्द्ध्वत्वलक्षणो वर्तते तेन धर्मेण सदृशोऽयं धर्म उपलभत इति। तस्योपपत्तिरध्यवसायः यदुक्तं भवति सदृशस्य धर्मस्योपलब्धेस्तदुक्तं भवति समानस्य धर्मस्योपपत्तेरिति यस्मात् पुनरेवं नोच्यते समानधर्मोपलब्धेरिति अयुक्तमपि यस्माद् गम्यते[1] गम्यमानस्याभिधानं व्यर्थं केन पुनरेतद् गम्यत[2] इति विशेषापेक्ष इति वचनेन कथं विशेषस्यापेक्षा आकाङ्क्षा सा चानुपलभ्यमानविशेषे युक्ता। यदि चायं विशेषं न पश्यति विशेषानुपलब्धेर्गम्यत एव सामान्यं पश्यति अथ पुनर्नायं सामान्यं विशेषं पश्यति विशेषापेक्ष इति व्यर्थं वचनं स्यात् अनेन सामर्थ्येन गम्यते सामान्यमुपलभत इति। अथ योपलब्धिपर्याय एवोपपत्तिशब्द इति उपपत्तिः प्रमाणगम्यता सा चोपलब्धिः यः पुनरनुपलभ्यमानसद्भावो धर्मः सोऽविद्यमानवद्भवतीति। का पुनर्विद्यमानस्याविद्यमानेन समानता प्रमाणासालम्बनत्वम्। अविद्यमानमपि प्रमाणस्यालम्बनं स्वतन्त्रं न भवति तदप्यनुपलब्धिलक्षणप्राप्तमिति विषयशब्देन वा विषयिणं प्रत्याह समानधर्मोपपत्तिशब्देन वा विषयी प्रत्ययो विधीयते लौकिकं वा न्यायमनेन वाक्येनावद्योतीति यथा लोके वक्तारो भवन्ति।

(१) मन्यते—पा॰ २ पु॰।
(२) मन्यते—पा॰ २ पु॰।

धूमेनाग्निरनुमीयत इति न च वाक्ये दर्शनशब्दः श्रूयते । अर्थप्रत्यायकत्वाच्च वाक्ये दर्शनशब्दमनुजानाति धूमं दृष्ट्वाऽग्निरनुमीयत इति । अव्यवच्छेदहेतोरिति वक्तव्यम् । यदिदं समानधर्मोपपत्तेरिति पदमेतन्न व्यवच्छेदहेतोः समानधर्मोपपत्तेरिति वक्तव्यम् । न हि केवला समानधर्मोपपत्तिः संशयकारणमन्यथा कृतकत्वादिनापि संशयः स्यात् समानं कृतकत्वं सर्वानित्यानामिति व्यवच्छेदहेतुत्वान्न भवति । न । समानार्थापरिज्ञानात् । व्यवच्छेदहेतुश्च भवति समानश्च धर्म इति न युज्यते व्यवच्छेदहेतुर्नाम विवक्षिततज्जातीयवृत्तित्वे सति यो विजातीयवृत्तिः स व्यवच्छेदहेतुः तस्य च समानार्थता नास्ति । समानो हि धर्मो यो विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिः तस्मादव्यवच्छेदहेतोरिति न वक्तव्यम् । सोयं साधारणो धर्म उपलभ्यमानः संशयहेतुः किं केवल इति न केवलः किं तर्हि उपलब्ध्यनुपलब्ध्यव्यवस्थितेश्च । यदि चोपलब्ध्यनुपलब्धी न व्यवस्थिते भवत इति किमेतावन्मात्रं साधनमिति नेत्युच्यते । यदि विशेषाकाङ्क्षा भवति समानधर्ममुपलभते । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते । इदं तु यावानिदन्तया वा विशेषाकाङ्क्षायां च सत्यामर्थसन्देहो भवतीति । किमिदं समस्तं कारणमसमस्तं वा समस्तमिति ब्रूमः । यदि समानधर्मोपपत्तेरिति केवलमुच्यते । उपलब्धिविषयस्यापि सामान्यत उपलब्धिरस्तीति तस्याऽपि संशयः स्यात् । यदि पुनरुपलब्ध्यनुपलब्ध्यव्यवस्थितिश्च संशय इत्येतावदुच्येत अनुपलब्धिसामान्यस्यापि क्वचिदुपलब्ध्यनुपलब्ध्यव्यवस्थास्तीति संशयः स्यात् । विशेषापेक्ष इत्येतावति चोच्यमाने ऽनुपलब्ध-

सामान्यस्यापि कश्चिद्विशेषस्मृतिरस्तीति संशयः स्यात्। एवं समानधर्मोपलब्ध्यनुपलब्ध्यव्यवस्थितिश्चेति पदद्वयेऽपि नौयानप्रेक्षणादिगतस्य न भवति संशयः। एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति पदद्वये विधीयमाने ऽन्यथाप्यनुपलब्धेर्थे संशयः स्यात्। समानधर्मोपपत्तेर्विशेषापेक्ष इति चोच्यमाने समानदर्शने सत्यपि विशेषाकाङ्क्षायां सत्यामुपलब्ध्यनुपलब्ध्योर्व्यवस्थानान्न भवति संशयः। यदायं द्रष्टा पूर्वं सामान्यविशेषवन्तमुपलभते तत्र चोपलब्ध्यनुपलब्धी व्यवतिष्ठेते सोऽयं द्रष्टा तस्मात् स्थानात् यदापैति ततोस्थापगमाद्विप्रकर्षान्निमित्तादल्पविषयविशेषानाभासन्ते महाविषयं सामान्यमाभासते उपलब्ध्यनुपलब्धी पुनर्व्यवतिष्ठेते विशेषानुस्मृतिश्चास्ति न च सन्दिह्यते तस्मादेकद्विपदपर्युदासेन समस्तं लक्षणमुच्यत इति। समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्ष इति चैकपदपर्युदासः कृतः। समानधर्मोपलब्धेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च समानधर्मोपपत्तेर्विशेषापेक्ष इति च उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च द्विपदपर्युदासः कृतः। समस्तपदपरिग्रहेण यस्मात् समानधर्मोपलब्धेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इत्याह। तेन ज्ञापयति समस्तमेतल्लक्षणमिति। विमर्श इति नानार्थावमर्शनं विमर्शः। उभावर्थौ स्पृशतीव[1] संशीतिः संशय इति भावसाधनम्। करणसाधनं वा। संशय्यते ऽनेनात्मा सुप्त इव भवति क उपमार्थः अर्थानवधारणमुपमार्थः। एतेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम्। कोतिदेशार्थः यथाद्यपदे त्रिपद-

(१) स्पृशतीव—पा० १ पु०।

परित्यागेन एकपदे द्विपदपरित्यागः कृतः। तथाद्यानन्तरयोरपि द्रष्टव्यमिति। अनेकधर्मोपपत्तेः संशय इति। अनेकस्यानेकस्य धर्म इति चेत् अनेकस्य धर्मोऽनेकधर्मः। अनेकस्य द्रव्यगुणकर्मलक्षणस्य संयोगजत्वं धर्मः अनेकस्य धर्मः संयोगजत्वनिर्गुणत्वनिष्क्रियत्वक्षणिकत्वानि शब्दे तदेवमनेकधर्मोपपत्तेः संशय इति चेत् तदयुक्तम् समानधर्मोपपत्तेरित्यनेन चरितार्थत्वात्। समानधर्मोपपत्तेरित्यनेनैव यश्चैकोऽनेकवृत्तिश्चानेकवृत्तिः स लभ्यत इति चरितार्थत्वात्। न पुनरनेकधर्माभिधानेन प्रयोजनमस्तीति। अथानेकधर्मशब्दस्य कोऽर्थः असाधारणो धर्मः कथं पुनरसाधारणो धर्मोऽनेकधर्म इत्यनेन समानपदेनाभिधीयते समानासमानजातीयविशेषकत्वात् समानासमानजातीयं चानेकं तस्माद्विशेषको धर्मः अनेकस्माद्विशेषोऽनेकधर्म इति तस्य वानेकस्य धर्मो यथा खं सेोऽयमनेकधर्म इति। एकानेकप्रत्ययहेतुर्वा धर्मोऽनेकधर्मः यत एव प्रत्ययो भवतीदमेकमनेकमिति। तन्नैकप्रत्ययहेतुरभेदः। अनेकप्रत्ययहेतुधर्मो विशेषः यथा शब्दस्य विभागजत्वम्। सामान्यविशेषसमवायेभ्यः शब्दस्य सदादिना विशेषेण निर्भक्तस्य तस्मिंस्तु द्रव्यं गुणः कर्म वेति विभागजत्वात् संशयः। न हि द्रव्यगुणकर्मणामन्यतमं विभागाज्जायमानं दृष्टं सर्वेषासम्भवात् विभागजत्वं संशयं करोति सर्वतो व्यावृत्तेरिति। ननु च विभागजो विभागो विद्यते गुणः। अनभ्युपगतविभागजविभागस्यैतदेवं भवति। यः पुनरनभ्युपगतविभागजविभागः तस्यायं निर्णयहेतुः गुणः शब्दो विभागजत्वात् विभागजविभागवदिति। अस्तु वा तस्यापि विभागजविभागासमवायिकारणत्वात्

निभागजविभागासमवायिकारणः शब्दो नान्यः पदार्थ इति । तदेवं विभागजत्वं विभागजविभागासमवायिकारणत्वं न ते शब्दाद्भवतीति सर्वतो व्यावृत्तेः संशयहेतुः तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वादिति । समानधर्मोपयोगाद्वाऽसमानानेकधर्मो भवति । यदा यस्य संशयकारणत्वेनोपनीतस्य समानधर्मस्यासमानस्य च समानस्य धर्मस्योपयोगादनुपयुक्तोऽसमानः सोऽनेकशब्दस्य विषयविशेष इति कस्मात् पुनरेकमेव नोच्यते समानासमानधर्मोपपत्तेरिति नैवं शक्यमभिधातुम् अनेकस्माद्व्यावृत्तो यो धर्म इति अयं विग्रहो न लभ्यते लाघवं वा प्रयोजनमेकाक्षरापचयात् लाघवं प्रयोजनमाश्रित्याभिधानं वा । यद्यनेकधर्मार्थोऽसाधारणार्थः असाधारणश्च धर्मः संशयकारणमिति । नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गादित्ययमप्यसाधारणत्वात् संशयहेतुतः प्राप्तः नैषदोषः यथैव साधारणो धर्मः संशयहेतुरिति नान्वयिनः साधारणत्वे सति संशयहेतुत्वं भवति । अन्वयव्यभिचारादेवं व्यतिरेकिणोऽपि सत्यसाधारणत्वे सति व्यभिचाराव्यभिचारौ संशयनिर्णयहेतू । यो व्यभिचारी स संशयहेतुः योऽव्यभिचारी स निर्णयहेतुरिति यदि तदुभयोर्व्यभिचारित्वात् संशयहेतुत्वं नन्वसमानधर्मोपपत्तेरित्यनेनैव गतमेतत् गतार्थत्वात् न संशयहेतुत्वेनायं पृथक् । सत्यम् । व्यभिचारितामन्तरेण नान्येन न संशयकारणमपि तु व्यभिचारितायां सत्यां विधीयमाने व्यभिचारः प्रतिषिध्यमानव्यभिचारस्येति भेदः समानधर्मोपपत्तेरित्यनेन विधीयमानव्यभिचार उपदिश्यते विभागजत्वादित्यनेन प्रतिषिध्यमानव्यभिचार इति । एतावता पृथगभिधानम् । नञः पर्युदासविषयत्वाद-

व्यभिचारिधर्मद्वयोपनिपातोऽनेकधर्म इति केचित्। एके त्वनेकधर्म इत्यन्यथा व्याचक्षते एकस्मादन्योऽनेकधर्म इति। एवं च विरुद्धाव्यभिचारिधर्मद्वयोपनिपातो लभ्यते यं प्रति तर्कमाहुः स च संशयहेतुः यथा श्रावणत्वकृतकत्वे शब्दस्येति। तदयुक्तम्। असम्भवात्। न ह्यव्यभिचारिणौ विरुद्धावेकस्मिन्नर्थे धर्मौ सम्भवतः वस्तुनो द्वैरूप्यासम्भवात् यद्युभावव्यभिचारिणौ स्याताम् एकतमं वस्तु द्व्यात्मकं भवेत् न चैतदस्ति तस्मान्नोभावव्यभिचारिणाविति। न चायं प्रयोगो युक्तः। कथमिति। यदि तावदयं प्रयुङ्क्ते यथा प्रयुक्तो नो हेतुः तथायमपीति। प्रसिद्धेन व्यपदेशा भवन्तीति सिद्धं सर्वस्याहेतुत्वम् विरुद्धार्थप्रतिपत्तिबाधितत्वादुत्तरस्यानभिधानम्। अथैवं क्रियते यथैव द्वितीयमनुमानं न भवति तथा प्राक्तनमपीति एवं प्रतिपक्षं द्वितीयानुमानस्यासाधकत्वम् अत्र विरुद्धधर्मावेकत्र सम्भवत इति सम्भवान्न विरुद्धौ। कश्च विरुद्धार्थः किं सहासम्भवः आहो विरुद्धार्थसाधकत्वम् अथ स्वरूपमिति। यदि सहासम्भवः स नास्ति दर्शनात्। अथ विरुद्धार्थसाधकत्वं विरोधः तदपि न युक्तम् वस्तुनो द्व्यात्मकत्वासम्भवात् यदि विरुद्धार्थसाधकत्वमनयोर्धर्मयोर्भवेत् एकं वस्तु द्व्यात्मकमापद्येत। अथ स्वरूपमनयोर्विरुद्धमिति न किञ्चिद्बाधितं भवति यस्मात् कृतकत्वं न श्रावणत्वं श्रावणत्वं वा न कृतकत्वं तस्मान्न संशय इति। उपेत्य वा विरोधं यदि विरुद्धार्थाभ्यां कृतकत्वश्रावणत्वाभ्यां शब्दे संशयः क्रियते विशेषदर्शनादुपजातः कस्य दर्शनान्निवर्तते न हि विशेषदर्शने सति विशेषाकाङ्क्षा भवति यथोपलब्धसामान्यस्य विशेषाकाङ्क्षा भवति। प्रत्यक्षतो निवर्तिष्यत इति चेत्।

न। योऽनुमानाभ्यां सन्निपाताभ्यामर्थे संशयः स प्रत्यक्षान्निवर्त्तिष्यत इति। तच्च युक्तम्। प्रत्यक्षाविषयत्वात्। नायमर्थः प्रत्यक्षविषय इति। किं शब्दोऽनित्यो वेति। आगमान्निवर्त्तिष्यत इति चेत्। न। आगमस्य च विचार्य्यमाणत्वात् आगम एवायं विचार्य्यते किं शब्दो नित्योऽथानित्य इति। न चायं प्रत्यक्षविषयो नागमविषयः अनुमानाभ्यां च नायं परिच्छेत्तुं शक्यते योऽयमनिवर्त्यः संशयः प्राप्तः। भवतु किं नो बाध्यते कथं न बाध्यते। यदा वस्त्वन्तरपरिच्छेदकमनुमानं न भवति यथाऽनित्या बुद्धिः कृतकत्वादिति इदं खलु कृतकत्वं शब्दे दृष्टं स चानवधारितस्वभावो नित्योऽनित्य इति। तच्चोपलभ्यमानं कृतकत्वमन्यत्र बुद्ध्यादौ संशयहेतुरिति सर्वमनुमानमनित्यत्वसाधनं न स्यात् सर्वं चानुमानमयं न्यायो बाधत इति यस्य न्यायोऽनुमानमूलमुच्छिनत्ति नायं न्यायो बाधितुं युक्तः नित्यासम्भवात् नायमस्मान्न्यायो बाधते यस्य नित्यं किञ्चिदस्ति तस्य विरुद्धाव्यभिचारी भवति। अस्माकं तु पक्षे नित्यं किञ्चिन्नास्तीति। न। बाधापरिज्ञानात् न भवता बाधविषयोऽवलोकितः किन्तु नित्यमस्माकं नास्तीति एतावन्मात्रेण परपक्षे दोषोऽभिधीयते भवतामपि पक्षे विरुद्धाव्यभिचारी कृतावकाशः कथं सप्रतिघं विज्ञानं सत्त्वाद्रूपवदित्येकः अप्रतिघं विज्ञानं स्वरूपत्वाद्वेदनावदित्यपरः। तदेवमव्यभिचारिधर्मद्वयोपनिपाताच्च सप्रतिघं नाप्रतिघं सिद्ध्येत् तस्मादपन्यायोऽयं विरुद्धयोश्च धर्मयोः सन्निपाताच्छब्दे संशय इति। धर्मयोः सातत्यादभिलापानुपपत्तिः नायमतद्धर्मा कदाचिदपि शब्द उपलभ्यते सततं तु तद्धर्मा भवति श्रावणः कृतकश्चेति

अभिलापो न स्यात् नित्योऽनित्य इति । न हि कदाचिदयं द्रष्टा एकस्मिन् वस्तुनि स्थाणुपुरुषधर्मावुपलभमानः प्रब्रूयादहम् स्थाणुर्वा पुरुषो वा । नैवं भविष्यतीति व्याहतमुच्यते । ननु च भवताभिधीयते नित्य इति मयाप्यभिधीयते अनित्य इति कथं नाभिलप्यते सोऽयं विरुद्धाव्यभिचारिन्यायो विचार्यमाणः सर्वथानुमानं बाधत इति प्रसक्तमनेन। अथ कृतकत्वश्रावणत्वे सहिते हेतू भवत इति तथापि कृतकत्वश्रावणत्वे सहिते न विभागजत्वाद्भिद्येते यथैव विभागजत्वमन्यावृत्तित्वादसाधारणं शब्दे संशयं करोति तथा कृतकत्वश्रावणत्वेऽपि शब्दवृत्तित्वादन्यथासम्भवात् संशयहेतू भवतः सोऽयमसाधारण एव न धर्मान्तरं तद्ग्रहणेनैव सङ्गृहीत इति तस्मादेकस्मादन्यो धर्मोऽनेकधर्म इति वक्तव्यमिति । यदा पुनरेवम्भूतौ धर्मावेकस्य वस्तुनो भवतः तदा तेनोपलब्धा तस्य वस्तुनः किं प्रतिपत्तव्यं तदा तयोरेव धर्मयोः सामर्थ्याधिगतौ यत्नः कर्तव्यः नोभावेतौ साधने कतरोऽत्र साधनं कतरस्यासाधनमिति सामर्थ्याधिगमे यत्नः करणीय इति । यत्नश्च क्रियमाणोऽनित्यसाधनेष्वेवावतिष्ठते कुतो नित्यत्वस्य प्रमाणबाधितत्वात् तच्चोपरिष्टाद्वक्ष्यामः । तदेवं व्यवस्थितमेतत् अनेकधर्मोपपत्तेरसाधारणात् धर्मात् संशया इति विप्रतिपत्तेः संशय इति व्याहतार्थप्रवादो विप्रतिपत्तिशब्दस्यार्थो व्याहतार्थप्रवादविषयत्वमुपलभमानस्योपलब्ध्यनुपलब्ध्योश्चाव्यवस्थाने सति तद्गतविशेषापेक्षस्मृतौ सत्यां संशयो भवतीति । तत्र समानोऽनेकस्य धर्मो ज्ञेयस्य उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे इति भाष्यम् । तत्रोपलब्ध्यनुपलब्ध्योस्तावत् पृथक् संशयकारणत्वं न भव-

तीति चर्चितमेतत्। समानोऽनेकस्य धर्मो ज्ञेयस्य इत्येतदपि न बुद्ध्यामहे। किमत्र धर्मः संशयकारणमथ ज्ञानमिति। न धर्मः संशयकारणमित्यनेकधा समर्थितम्। समानानेकधर्मज्ञानं तु संशय कारणं तच्च ज्ञातरि वर्त्तत इति नास्ति भेदः। समानानेकधर्मयोस्तु पृथगभिधानं(१) उक्तं प्रयोजनम् विधीयमानप्रतिषिध्यमानधर्मभेदादिति। विप्रतिपत्तेरित्ययं वक्तृगतः संशयहेतुः। केऽत्र सम्यक्प्रतिपन्नाः के मिथ्येति श्रोतुः सन्देहो भवति एतावता भेदेन पृथगभिधानम्। समानधर्मः स एवायमिति चेत् समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शश्च प्रतिपत्तेश्चेति(२) सर्व एवायं समानधर्मोऽभिधीयते तस्मादैयर्थ्यात् पृथगनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च इति न प्रयोजनमस्ति। अत एवं वक्तव्यम्। समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति न सूत्रार्थापरिज्ञानात् सूत्रार्थमपरिज्ञायैतदुच्यते। यथा च भेदः समानानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति तथा वर्णितम्। अपरे पुनः समानधर्मोपपत्त्यादिभिः पदैः पृथक् पञ्चविधं संशयं वर्णयन्ति। समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति एवं शेषेषु पदेषु तन्न युक्तम् उपलब्ध्यनुपलब्ध्यव्यवस्थायाः पूर्वपदविशेषणत्वात् समानधर्मोपपत्तौ सत्यामुपलब्ध्यनुपलब्ध्यव्यवस्थायां च सत्यां विशेषापेक्षो विमर्शः संशय इति सूत्रार्थः। एवमनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति वाच्यम्। तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्था पृथक् संशयकारणमिति। उपलब्ध्यनुपलब्ध्योर्द्वैविध्यात् संशयो न युक्तः कुतः लोकविरोधात्

(१) पृथगभिधाने—इति साधुः।

(२) समानधर्मोपपत्तेर्विप्रतिपत्तेश्चेति—पा० १ पु०। अयमेव साधुः। विमर्शश्चेति क्वचित्। एवमग्रे ऽपि।

उपलब्ध्यनुपलब्ध्योर्द्वैविध्यात् संशयो भवतीति ब्रुवाणो लोकं बाधते। कथमिति यत्किञ्चिद्द्रव्यमुपलभते सर्वत्रास्य संशयो न[1] भवितव्यम्। किं कारणम् उपलभ्यमानं द्वेधा भवति। उपलब्ध्योर्द्वैविध्यात्तु यः संशयो भवतीति तस्य कुतो निवृत्तिः विशेषदर्शनान्निवर्त्तत इति चेत् विशेषेष्वप्येवं य एते विशेषा उपलभ्यन्ते किमेते सन्त आहोऽसन्त इति यावदुपलब्धिद्वैविध्यात् संशय इत्यनिवर्त्यः संशयः। एवमनुपलब्धिद्वैविध्येऽपि वक्तव्यम् न चास्य कचित् समाश्वासः स्यात्। यदायमपवरकादौ सर्पादीनुपलभते तदा सर्पवत् तद्देश उतासर्पवदिति संशयः अयमपि संशयोऽनिवर्त्त्य एवेति सर्वत्राश्वासो न स्यात्। येषां च पञ्चविधः संशय इति सूत्रार्थः तैरस्य कारणकृतो भेदो वक्तव्यः स्वभावकृतो वा। तद्यदि कारणकृतो न पञ्चविधोऽनेकरूपः संशय इति प्राप्तम्। अथ स्वभावभेदात् स्वभावभेदस्यासम्भवादेकरूपः संप्रीतिः संशय इति। तस्मात् पञ्चविधः संशय इति न सूत्रार्थः समानधर्मग्रहणाच्च संशयो धर्मिविषयत्वात् यदिदमुच्यते समानधर्मोपपत्तेः संशय इति। तदयुक्तम्। धर्मिविषयत्वात्। न हि समाने धर्मे उपलब्धे धर्मिणि संशयो (न) युक्तः धर्मधर्मिणोर्भेदात्। न हि गवि दृष्टे अश्वे संशयः (धर्मिणस्त्वादृष्टत्वात्। नानुपलब्धे न निर्णीते संशयो भवतीति च व्याघातः। धर्मधर्मिभावात् संशय इत्येके। एके तावत् परिहारं ब्रुवते धर्मे दृष्टे धर्मिणि संशयः[2]) धर्मधर्मिभावानुपपत्तेः न हि धर्मधर्मिभावेन नानात्वं निवर्तते। अथ

(१) संशयेन—इति साधुः।

(२) परीहारं—पा॰ २ पु॰। ( ) एतन्मध्यस्थः पाठोऽनुपयुक्त इति सूचितं २ पु॰।

धर्मधर्मिभावे नियामक इच्छादिसूत्रं तर्हि व्याहन्यते कथमिति इच्छादयः प्रतिसन्धानादात्मानं गमयन्तीति सूत्रार्थः। तत्र परः प्रत्यवस्थितः कार्यकारणभावात् प्रतिसन्धानमिति न नानात्वस्थावधानादित्येतेन निवर्त्यते। इह पुनर्भवता धर्मधर्मिभावादिति पुनर्भवता नानात्वमेव धर्मधर्मिभावविशिष्टं नियामकमुच्यत इति ब्रूयात् परोऽपि वक्तुं कार्यकारणभावो नियामक इति तस्मादपव्याख्यानमेतत् धर्मधर्मिभावात् संशय इति। अथ समानधर्मोपलब्धेरन्यस्मिन्नुपलब्धे धर्मिणि संशयो भवतीति कः परिहारः। अयं परिहारः बहुव्रीहिः समासोऽतो धर्मिणोऽभिधानं समानधर्मोपपत्तेरित्यनेन पदेन बहुव्रीहिसमासे धर्म्येव व्यपदिश्यते कथं समानो धर्मो यस्य स भवति समानधर्मा समानधर्मण[1] उपपत्तिः समानधर्मोपपत्तिः किमुक्तम्भवति समानधर्मवतो धर्मिणो दर्शनादिति। विशेषापेक्षो विमर्शः संशय इति विशेषापेक्षो विशेषस्मृत्यपेक्ष इति। अथ सा विशेषस्मृतिः किंविशेषविषया उतान्यविषयेति योऽसौ संशयस्य विषयः तं समानधर्माणमुपलभते तस्यायं विशेषाननुस्मरति उतान्यस्येति। यदि तावत् तस्य तत्र युक्तं तद्विशेषाणां क्वचिदनुभवात् सोऽयं पूर्वमुपलब्धविशेषः तद्गतान् विशेषाननुस्मरतीति युक्तम् तद्विशेषाणामनुभूतत्वात् यदा पुनरयमनुपलब्धविशेषे सामान्ये उपलभ्यमानः सन्दिह्यते तत्र विशेषानुस्मृतिः कथम् तद्विशेषाणामननुभूतत्वादिति। न। सामान्यवचनत्वात्। विशेषापेक्ष इति

(१) समानधर्मवत इति—पा० १ पु०। स च प्रामादिकः।

सामान्यवचनं पुनरनेनावधार्यते तस्य वान्यस्य वेति यदा तद्गता विशेषाः सुस्मूर्षिता भवन्ति तदानुभूतेषु विशेषस्मृतिः यदा त्वनुपलब्धपूर्वे संशयः तदा सादृश्यादन्यगतान् विशेषान् सुस्मूर्षते एवं तावद्व्यवस्थिते त्रिविधः संशय इति । अनेन च संशयलक्षणेन यान्यन्यानि विरुद्धानि तान्यपि संगृहीतानि । यथा काश्यपीयम्(१) । सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशय इति । अस्यार्थः सामान्यप्रत्यक्षादिति सामान्यवतः प्रत्यक्षादिति विशेषाप्रत्यक्षत्वमव्यवस्थितविशेषत्वं नास्य विशेषा व्यवस्थिता इति विशेषस्मृतेश्च संशय इति समानम् । कथं पुनरनेन सूत्रेणासाधारणो लभ्यत इति लभ्यते च व्यभिचारित्वात् व्यभिचारी साधारणः तस्मासाधारणेऽपि व्यभिचारित्वमस्तीति लभ्यते । अनेकधर्मोपपत्तिस्तर्हि पृथङ्न पठितव्या(२) अन्वयव्यतिरेकभेदविवक्षायां पृथगभिधानं पुनः संशयकारणभेदविवक्षयेति । ये त्वत्र विशेषाप्रत्यक्षाद्विशेषस्मृतेश्चेतिपदयोः पौनरुक्त्यं वर्णयन्ति । सामान्यप्रत्यक्षाद्विशेषस्मृतेश्च संशय इत्यभिधीयमाने किन्न गम्यत एतद्विशेषाप्रत्यक्षादिति न हि कश्चिद्विशेषान्(३) प्रत्यक्षान् स्मरति । तन्न । सूत्रार्थापरिज्ञानात् । नायं सूत्रार्थः विशेषाणामप्रत्यक्षत्वमिति । अपि त्वव्यवस्थितविशेषवत्त्वं विशेषाप्रत्यक्षत्वमित्यतो नायं दोष इति । अन्ये तु संशयलक्षणमन्यथा व्याचक्षते । साधर्म्यदर्शनाद्विशेषोपलिप्सोर्विमर्षः संशय इति । तैरपि साधर्म्यस्यावधारितत्वात् संशयस्य विषयो वक्तव्यः । धर्मीति चेत् ननूक्तः संशयस्य

(१) काश्यपी क्षितिरित्यमरः ।
(२) पाचितव्या—पा० २ पु० ।
(३) प्रत्यक्षान्—इति केचित् ।

विषयो धर्मी सत्यमुक्तो न पुनर्युक्तः कथं न युक्तः यदि तावद्धर्मव्यतिरिक्तं धर्मिणमभ्युपैति व्याहतं भवति । धर्मधर्मिणोश्च नानात्वाभ्युपगमे धर्मस्यावष्टतत्वात् धर्मिणश्चादृष्टत्वात् न ह्यन्यस्मिन् दृष्टेऽन्यत्र संशयो भवति। अथाप्यसद्दिशा साधर्म्याभिधानेन धर्म्मैवोच्येत तन्न युक्तं सधर्मणो भावः साधर्म्यं साधर्म्यमिति च भावाभिधानेन धर्मोऽभिधीयते न धर्मी न च युक्तोऽन्यस्य दर्शनादन्यत्र संशय इति। अथार्थान्तरभावं नाभ्युपैति तथापि साधर्म्यस्यावष्टतत्वात् क संशय इति। यदि चायं धर्मिणं नोपलभते कस्यायं विशेषमुपलिप्सेत। न हि साधर्म्यस्य विशेषाः सम्भवन्तीति। अथ सामान्यवतो विशेषा इति तन्न तथास्यादृष्टत्वादित्युक्तम् । न सामान्यविशेषाः सन्तीति सामान्यवतो विशेषा भवन्तीत्येवं ब्रुवता सामान्यविशेषतद्वतां भेदोऽनुज्ञातो भवति अर्थस्याभिधानं न सामान्यविशेषास्तद्वतो विशेषा इति। उपलब्ध्यनुपलब्धिव्यवस्थाने च साधर्म्यदर्शने सत्यपि विशेषोपलिप्सायां च न संशयो भवतीति उपलब्ध्यनुपलब्ध्यव्यवस्थात इति वक्तव्यम् अनेकधर्मदर्शनादिति च समानानेकधर्मोपपत्तेरित्येवमादिवाक्यं संशयलक्षणं तद्विचार्यते किन्तावदयं कारणोपदेश आहो संशयस्वरूपावधारणमिति। यदि कारणनिर्देशोऽयमिदमुच्यते समानानेकधर्मादिभ्य इति अन्यान्यपि संशयकारणानि तान्युपसंख्येयानि । यथात्ममनःसंयोग आन्तरस्य आत्ममनःसन्निकर्ष इन्द्रियार्थसन्निकर्षो बाह्यस्येति। अथ स्वरूपावधारणं कारणं निर्देशोऽनर्थकः संशीतिः संशय इति वक्तव्यम्। अस्तु तावत् कारणावधारणम् ननूक्तं कारणान्तरमप्युपसंख्येयमिति न नेदं कारणाव-

धारणार्थमपि त्वसाधारणकारणनिर्देशोऽयम् तस्मादिन्द्रियार्थसन्नि-कर्षादीनामप्रसङ्गः प्रत्यक्षसाधारणत्वात् स्वरूपनिर्देशो वा भवतु इदमेवास्य स्वरूपं समानधर्मादिभ्यो जन्मेति सोऽयमेवम्भूतः संशयो विचाराङ्गतयोपादीयते। संशयवद्विपर्ययोऽपि विचाराङ्गम् सोऽपि पदार्थत्वेन वक्तव्यः सत्यमसौ पदार्थो न तु विचाराङ्गमित्यतो नाभिधेयः कथं न विचाराङ्गं यथा सन्दिग्धस्तद्विशेषप्रतिपत्त्यर्थे यतते नैवं विपर्यस्त[१] इति न्यायविधानङ्गत्वात् अतो नाभिधीयते॥

## यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्॥ २४॥

यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्। यमर्थमधिकृत्येति। व्यवसायोधिकारः। कस्य व्यवसायः सुखदुःखसाधनानाम्। इदं सुखसाधनमिति ज्ञात्वा सुखाप्तये प्रयतते इदं सुखसाधन[२]मिति चाधिगम्य दुःखहानायेति। सुखदुःखयोरवाप्तिहानाभ्यामयं लोकः प्रसज्यत इति। सुखदुःखाप्तिहानी प्रयोजनमिति। अनेन च प्रयो-जनेन सर्वे ऽर्थाः संगृहीता भवन्तीति। एकस्मिंश्च सूत्रार्थे परस्य दोषविवक्षया चोद्यमानस्य वक्तुमशक्यस्य व्यवहारो लौकिकोऽयमर्थः प्रसज्यते ऽनेनेति प्रयोजनमिति। न चानेन न्यायस्य किञ्चित् क्रियत इति न्यायाङ्गभावो नास्तीति यस्तावल्लौकिकोऽयमर्थ इति न ते[३] प्रकृष्टतार्किकादन्यो वक्तुमर्हतीति। अयमेव च पदार्थो लौकिको न प्रमाणादय इति कस्मादसौ लौकिक इति। यदि प्रमाणोपपन्न-

---

(१) विपर्ययस्य—इति १ पु०। (२) दुःखसाधनमित्यनुमीयते।
(३) न ज्ञाते—इति भेदः।

पुनरेतत् सामान्यतोऽवगतमिति। अविज्ञाततत्त्वेऽर्थे प्रत्यभिज्ञानात् यस्मादयमात्माविज्ञाततत्त्व इति तेन ज्ञापयति सामान्यमवगतमिति। यदि पुनः सामान्यमपि नाधिगतं स्यान्न ब्रूयादविज्ञाततत्त्व इति अविज्ञात इत्येवं ब्रूयादिति अविज्ञाततत्त्व इति समासोऽयं न चार्थो गम्यते किमविज्ञातं तत्त्वं येन उताविज्ञातं तत्त्वं यस्य कश्चात्र विशेषः। यद्यविज्ञातं तत्त्वं येन सोऽयमविज्ञाततत्त्वः परिच्छेत्ता तस्मिन्नविज्ञाततत्त्वे परिच्छेत्तरि तदवगतार्थमूहस्तर्क इति प्राप्नोति। अथाविज्ञातं तत्त्वं यस्य तदविज्ञाततत्त्वं यस्मिन्नविज्ञाततत्त्व इति षष्ठीविग्रहेण युक्तमेतत्। विशेषहेत्वभावाच्चार्थाधिगमः नात्र विशेषहेतुरिति किमयं तृतीयाविग्रहेण समास उत षष्ठीविग्रहेणेति युक्तम् अर्थग्रहणसामर्थ्यात् यस्मादविज्ञाततत्त्व इति अर्थस्यार्थमाणत्वात् कर्म तेन ज्ञापयति षष्ठीसमासोऽयम्। तृतीयाविग्रह इति अर्थग्रहणमन्तरेणापि सामान्यतोऽवगतेरविज्ञातं तत्त्वं यस्येत्यप्यनुक्तेऽप्यर्थे गम्यत एवैतदर्थ इति। एवमपि समासे सन्देहतादवस्थ्यम्। माभूत् समासो वाक्यमेवास्तु अविज्ञातं तत्त्वमस्येति भवत्येवाभीष्टार्थप्राप्तिः लाघवार्थं तु समासकरणम् अनुक्तेऽप्यर्थे सामर्थ्याद् गम्यते अविज्ञातं तत्त्वमस्येति अथोक्तं सन्देह एवं स्यादिति समस्तानभिधानप्रसङ्गाच्च। यदि च सामर्थ्यमास्थित्यार्थग्रहणं प्रतिषिध्यते तदैवं युक्तमूहस्तर्क इति सामर्थ्यतः शेषं गम्यत इति तस्मादर्थग्रहणं शङ्कानिराकरणार्थमिति। माभूत् समस्ताभिधानं किन्नो बाध्यते न बुद्धिधर्मनिराकरणार्थत्वात् उभयथा चायमूहो भवति विज्ञाततत्त्वेऽविज्ञाततत्त्वे च तत्र तावद्विज्ञाततत्त्व ऊहः शुश्रूषाश्रवणधारणविज्ञानोहापोहतत्त्वाभिनिवेशा बुद्धिधर्मा

इति तत्त्वमवधृतं विजानाति विज्ञातमूह इति किमुक्तं भवति । योऽयावर्थः पूर्वमनेन विज्ञातस्तमेवोह इति पूर्वानुभूतपरिच्छेद ऊह इत्युच्यते न त्वयं तर्कः यः पुनरविज्ञाततत्त्वेऽर्थे ऊहः स तर्कः । षष्ठ्यभिधानमधिकरणार्थो[१]ऽसम्भवादविज्ञाततत्त्वस्यार्थस्येति वक्तव्यम् अविज्ञाततत्त्वोऽर्थो ज्ञायमानः कर्म भवति कर्मणि च षष्ठ्येव ज्ञायते यथा घटस्य विज्ञानमिति । न । विभक्तिव्यत्ययात् । षष्ठीस्थान एवैषा सप्तमी द्रष्टव्या यथान्यत्र इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतव इति व्यत्ययः कस्मात् यदि व्यत्ययेन कश्चिदर्थो लभ्यते युक्तो व्यत्ययः यथा यस्मिन्नेवायुगपत् संयोगविशेषा इति अधिकरणार्थं इषोरपि येऽवयवास्तेषामपि संयोगविशेषास्तेऽपि कर्मान्यत्वे हेतव इति । न पुनरिह व्यत्ययेन फलं पश्यामः तस्माद्युक्तो विभक्तिव्यत्यय इति । न न युक्तः । सामान्याधिगतस्य विशेषज्ञापनार्थं यस्यैव सामान्यमधिगतं तद्धर्मिणो विशेषा अप्यवगन्तव्या इति ते च विशेषाः संयोगिनः समवायिनश्च भवन्तीति कारणोपपत्तितः प्रमाणोपपत्तितश्च । उपपत्तिः सम्भवः सम्भवत्यस्मिन्नर्थे प्रमाणमिति भवेदयमर्थ इति । उदाहरणं योऽयं ज्ञाता ज्ञातव्यमर्थं जानाति तं तत्त्वतो जानीयेयमिति किमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्म इति यावत् । एक उभयं जानातीति भाष्यम् । अनुत्पत्तिधर्मकेणानेन भवितव्यमिति य ऊहः स तर्क इति । नन्वेतत् तत्त्वज्ञानमेव किमुच्यते तत्त्वज्ञानार्थमिति नेदं तत्त्वज्ञानमनवधारणात् । न ह्ययमवधारयत्येवमेवेति किं त्वनुत्पत्तिधर्मकेण ज्ञात्रा भवितव्यमिति

[१] षष्ठ्यभिधानमधिकरणार्थो—पा० १ पु० ।

प्रमाणविषयमनुजानाति कथं पुनरयं तत्त्वज्ञानार्थं भवति प्रमाण-विषयाविवेचनात् प्रमाणविषयमनेन विविनक्ति अयमर्थो युक्त इति प्रमाणानि प्रवर्तमानानि तर्कविविक्तमर्थं तथाभूतमवगच्छन्तीति ऊहः संशयनिर्णयाभ्यां न भिद्यत इति केचित्। अयं किमोहः संशयो वा यदि संशयस्तेन संगृहीतत्वात् पृथक् न पठितव्यः अथ निर्णयस्तेन संगृहीत इति। अपरे त्वनुमानं तर्क इत्याहुः। हेतु-तर्कों न्यायोऽन्वीक्षा इत्यनुमानमाख्यायत इति। अपरे त्वनुमानमेव तर्कं युक्त्यपेक्षं वर्णयन्ति यत्तावन्निर्णयसंशयाभ्यां नोहो भिद्यत इति। तन्न प्रत्ययस्वरूपानवबोधात्। अविज्ञाततत्त्वेऽर्थे भवतीति सामान्ये-नाक्षिप्तो भवान् सत्यमविज्ञाततत्त्वे भवतीति न पुनः प्रत्ययस्वरूपं व्यज्ञायि भवता अनवधारणात्मकः प्रत्ययः संशयः किंस्विदिति। अवधारणात्मकः प्रत्यय एवमिदमिति निर्णयः। अयन्तु संशयात् प्रच्युतः कारणोपपत्तिरस्ति निर्णयं चाप्राप्तो विशेषादर्शनाद्विशेष-दर्शनान्निर्णयो भवति न चास्मिन् विशेषदर्शनमस्ति। एतेनानुमानं तर्क इत्येतदपि प्रत्युक्तम्। विशेषादर्शनादिति किं पुनरस्य स्वरूपं भवेदित्येव प्रत्यय इत्येतस्य स्वरूपमिति यैरप्यनुमानं युक्त्यपेक्षं तर्क इत्युच्यते तैरप्यनुमानात् तर्कभेदः स्वयं वक्तव्यः युक्तिः प्रमाणोप-पत्तिः प्रमाणोपपत्तिमपेक्षमाणो यः प्रत्ययः स तर्क इति केवलं सञ्ज्ञाभेदमात्रम्। अथ न प्रमाणोपपत्तिर्युक्तिः अनुमानं युक्त्यपेक्ष-मित्यपेक्षासामर्थ्यं वक्तव्यम्। स्वविषयाधिगमे चानुमानं किमपेक्षते। अथेतरप्रमाणापेक्षा युक्तिरित्युच्यते एवमप्यर्थयद्यार्थी वक्तव्यः। कथं प्रत्यक्षागमाभ्यामनुमानमनुगृह्यत इति। अथानुमानस्य प्रत्यक्षाग-

नैकविषयत्वं तथापि तर्कः त्रीण्येतानि प्रमाणविषयतया प्रतिसंहितानीति भवेत्। अवधारणप्रत्ययौ भिन्ननिमित्तौ विशेषवत्त्वात् प्रत्यक्षानुमानप्रत्ययवत् अनुमानं तर्कः लिङ्गलिङ्गिसम्बन्धस्यापेक्षत्वात् अनुमानवत् न तर्कस्वरूपानवबोधात् नैव लिङ्गलिङ्गिसम्बन्धस्यापेक्षः तर्कः कथमिति द्वयस्यानधिगतेः यत्र द्वयमधिगम्यते धर्मौ साधनधर्मश्च तत्रानुमानं प्रवर्त्तते यत्र पुनर्द्धर्मिमात्राधिगतिर्न लिङ्गाधिगतिरस्ति सत्कर्मविशेषे इति। तस्माल्लिङ्गलिङ्गिसम्बन्धस्यापेक्षत्वमनुपपन्नम् अनुमानं च धर्मिगतधर्मोपलब्धौ प्रवर्त्तते न पुनस्तर्कः तर्कस्त्वन्यगतधर्मप्रदर्शनेनापि प्रवर्त्तते यथा भवितव्यमनेन पुरुषेणेति यथास्मिन् देशेऽश्वा वाशन्त इति अश्ववाहनं पुरुषधर्मः सोऽयमन्यगतधर्मोपपत्त्या स्थाणुव्यवच्छेदमात्रमूह इति। सोऽयं तर्कः प्रमाणानि संधत्त इति प्रमाणसहितो वादेऽपदिष्टः न पुनरयं प्रमाणपरिच्छेदकत्वादिति ॥

**विमृश्य[1] पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥४१॥**

एतस्मिन् तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति सूत्रम्। सम्बन्धोऽर्थश्च पूर्ववदिति। विमृश्येति। विमर्शं कृत्वा पक्षान्यप्रतिपक्षाश्च पक्षप्रतिपक्षाभ्यां पक्षशब्देन पक्षविषयं साधनमुच्यते प्रतिपक्षशब्देन प्रतिपक्षविषयस्य साधनस्योपालम्भः ताभ्यां साधनोपालम्भाभ्यां यदर्थावधारणं स निर्णय इति। क्व पुनरयं नियमः किं तावन्निर्णये आहोस्वित् पक्षप्रतिपक्षाभ्याम् अथ विमृश्यैवेति यदा विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णय इति निर्णये नियम इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्यस्य व्याघातः। एतेन

(१) विमृश्येति क्वचित्।

विमृश्यैवेति प्रत्युक्तम्। अथ पक्षप्रतिपक्षाभ्यां निर्णय एव उभया-
श्रयो निर्णयः प्राप्नोति तर्कविषये नियमो नान्यत्र योऽयं तर्कस्य
विषय एतस्मिन् तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णयो
भवति पक्षप्रतिपक्षाभ्यामेव निर्णयो विमृश्यैवेति सामान्यनिर्णय-
लक्षणमेतत् कुतोऽयं नियमस्तर्कविषय इति तर्कस्यानन्तरोद्देशात्
तर्कविषय इति नियमः अन्यथापि निर्णयभावाच्च निर्णय इति।
अथ निर्णयस्य किं लक्षणम् अर्थपरिच्छेदोऽवधारणं निर्णय इति
योऽयं निर्णयः प्रमाणविषये भवत्येकशः प्रमाणैः क्रियते संहत्य च
तर्कविषये संहत्यान्यत्रैक इति वादे शास्त्रे च विमर्शवर्जं वादे पक्ष-
प्रतिपक्षाभ्यामेव न शास्त्रे वादे वा विमर्शोऽस्ति उभयोर्निश्चितत्वात्
शास्त्राभ्युपगतपदार्थस्य निश्चितत्वाच्च। पक्षप्रतिपक्षशब्देन साधनोपा-
लम्भयोर्ग्रहणमित्ययुक्तं प्रमाणाभावात् पक्षप्रतिपक्षशब्देन साधनोपा-
लम्भावुच्येते इति। किं प्रमाणम् कस्मात् पुनर्यथाश्रुति न भवति
पक्षप्रतिपक्षयोः कर्मत्वात् न च कर्मार्थपरिच्छेदकं परिच्छेद्यत्वात्
तस्मात् पक्षप्रतिपक्षशब्देन परिच्छेदकयोः साधनोपालम्भयोर्ग्रहणम्
तयोरकर्मकत्वात् तयोरेकस्माच्च ग्रहणमेवं वक्तव्यम् विमृश्य साध-
नोपालम्भाभ्यामर्थावधारणं निर्णय इति। एवं सति सुविशिष्टोऽर्थो
भवति। न च लाघवकृतः कश्चिद्विशेष इति नैकविषयज्ञापनार्थत्वात्
यद्विषयौ साधनोपालम्भौ तद्विषयो निर्णयः। अन्यथा हि साधनो-
पालम्भाभ्यां निर्णय इत्युक्ते न ज्ञायते क्व पुनर्निर्णय इति। पक्षप्रति-
पक्षशब्दाभ्यां च साधनोपालम्भयोर्ग्रहणं तद्विषयस्य चेति। अर्थग्रहणं
तर्हि न कर्तव्यम् गम्यमानत्वात् केन गम्यमानत्वात् विमृश्य पक्ष-

प्रतिपक्षाभ्यामेवावधारणमित्युक्ते गम्यते ऽर्थस्येति तस्मादर्थग्रहणं न कर्तव्यम् । श्रुतिसामर्थ्यादन्यतरनिर्णयज्ञापनार्थम् गम्यमानमर्थग्रहणं यत् करोति तेन ज्ञापयत्यन्यतरस्मिन् पक्षे निर्णय इति । पक्षप्रतिपक्षाभ्यामर्थावधारणमित्ययुक्तम् कस्मात् एकस्मादधिगतः नेदं पक्षप्रतिपक्षाभ्यां सह ताभ्यामवधारणं किं तर्ह्येकस्माद्योऽवतिष्ठत इति उभाभ्यामेवेत्याह। कथमिति । उभयनिवृत्तावनिवृत्तौ हि विमर्शः उभयावस्थाने चानिवृत्त इति यदा त्वेकोऽवतिष्ठत एको निवर्तत इति तदा निर्णय इति अतः संहत्य पक्षप्रतिपक्षौ निर्णयहेतू इति । एतस्मिन् विषये कदा निर्णयो भवति किं प्रथमे उत द्वितीये उत तृतीये इति । सर्वत्र भवत्यर्थस्य तथाभावात् अथवा तृतीय इति युक्तम् । कथमिति । एकस्तावत् साधनेन पक्षमवस्थापयति द्वितीयः साधनं दृष्ट्वा निवर्तते साधनाभासं वा बुद्ध्वा साधनदोषाद्विभावयिषया प्रवर्तते तस्मिन्निवर्त्ये साधनं ब्रूते प्रथम इदानीं निश्चितं(१) साधनमिति । यदि मन्यते न प्रवर्तते अयं दूषणाभासमिति बुध्यते तदुद्भावनार्थं प्रवर्तते तन्निवृत्तौ द्वितीयपक्षसाधनमपि निवर्तते । किं कारणम् प्रथमपक्षसाधनस्य निर्दोषत्वात् निर्दोषे च प्रथमपक्षसाधने न द्वितीयस्यावकाश इति निवर्तते न द्वितीयः पक्ष इति यत्रावतिष्ठते तस्मिन्निर्णयः स निर्णयः सम्भवासम्भवाभ्यां पक्षप्रतिपक्षयोः संहत्य क्रियते । निर्णयोऽनुमानमेवेति केचित् । केचिद्वर्णयन्ति निर्णयोऽनुमानमेव न पदार्थान्तरमिति । न । लिङ्गलिङ्गिसम्बन्ध्यपेक्षत्वादनुमानस्य निर्णये च तदभावः प्रमाण-

---

(१) निश्चेतुं—पा० २ पु० ।

फलत्वात् प्रमाणमनुमानम् प्रमाणफलं तु निर्णयः निर्णयः स्वविषय एव अनुमानं तु स्वविषयेऽन्यत्र च। यथा धूमदर्शनं धूमपरिच्छेदेनानुमानमपि निर्णय इति। यदा च परिच्छिनत्ति धूमेन तदानुमीयतेऽनेनेत्यनुमानमग्निपरिच्छेदः फलम्। यदा च भावसाधनमाश्रित्योच्यते ऽनुमानं निर्णय इति तदाभ्यनुज्ञया वर्तितव्यम्। यदा च करणसाधनतामाश्रित्योच्यते ऽनुमानं निर्णय इति तदा प्रतिषेधो वचनीयः कार्यकारणयोर्भेदात् कारणमनुमानं कार्यं निर्णयः तस्मान्नानुमानं निर्णय इति॥

इति—श्रीउद्द्योतकरे न्यायवार्त्तिके[१] प्रथमस्याध्यायस्याद्यमाह्निकम्॥

---

## अथ द्वितीयमाह्निकम्।

तिस्रः कथा भवन्ति वादो जल्पो वितण्डेति। नायं कथानियमः किं तर्हि विचारवस्तुनियमः यद्वस्तु विचार्यते तत् त्रेधा विचार्यते। तत्र विचारो वादो जल्पो वितण्डेति। तत्र गुर्वादिभिः सह वादः। विजिगीषुणा सह जल्पवितण्डे। तत्र यथोद्देशं लक्षणापदेशः वादस्य लक्षणमुच्यते तत्र प्रमाणतर्कसाधनोपालम्भ इति सूत्रम्॥

---

(१) परमर्षिभारद्वाजोद्द्योतकरीये न्यायसूत्रवार्त्तिके—इति क्वचित्।

यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ।

अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम्॥

इति पञ्चमाध्यायान्तस्थं वचनं तु भूमिकायां समालोचयिष्यामः।

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ ४२ ॥[१]**

तत्र वादः पक्षप्रतिपक्षपरिग्रहः कौ पुनरेतौ पक्षप्रतिपक्षौ वस्तुधर्मावेकाधिकरणौ विरुद्धावेककालावनवसितौ वस्तुधर्माविति वस्तुविशेषौ वस्तुनः सामान्येनाधिगतत्वात् विशेषतोऽनधिगतत्वाच्च। विशेषावगमनिमित्तो विचारः तस्माद्वस्तुधर्मावविशेषावेकाधिकरणौ नानाधिकरणौ विचारमप्रयोजयतः उभयोः प्रमाणोपपत्तेः तद्यथा अनित्या बुद्धिर्नित्य आत्मेति। अविरुद्धावप्येवं यौ विरुद्धौ तौ विचारं प्रयोजयतो नाविरुद्धाविति तद्यथा क्रियावद्द्रव्यं गुणवच्चेति। तत्र कालाविति निर्णयोत्तरकालं विचाराभावात् तावेतौ विरुद्धावेवं विशेषणौ धर्मौ पक्षप्रतिपक्षौ तयोः परिग्रह इत्यभ्यावनियमः। एवंधर्मायं धर्मी नैवंधर्मेति सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः। अस्य कथा मात्कृतयेऽपि[२] समानत्वात् विशेषणार्थं प्रमाणतर्कसाधनोपालम्भ इति प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इत्यस्मिन् भवतीति अस्मिन्निति सप्तमीनिर्देशो विषयज्ञापनार्थः। अस्मिन् विचारे कथं पुनः तर्केण साधनमुपालम्भश्च अप्रमाणत्वात् प्रमाणानुग्राहकत्वात् न प्रमाणसंगृहीतस्तर्को न प्रमाणान्तरमित्युक्तम्। सोऽयमप्रमाणात्मकः सन् कथं सिद्ध्युपालम्भयोः करणं भविष्यति न ब्रूमस्तर्कः सिद्ध्युपालम्भयोः करणमपि तु प्रमाविषयविवेचनात्तर्कः प्रमाणान्यनुगृह्णातीति तर्कविविक्तं विषयं प्रमाणानि प्रवर्तमानानि परिच्छिन्दन्ति। सोऽयं प्रमाणानामनुग्राहकत्वात् प्रमाण-

---

(१) यद्यपि न्यायसूचीपन्यानुसारेण प्रत्याह्निकं सूत्राङ्का भिन्ना एव तथापि मुद्रितसूत्रभाष्यपुस्तके ऽध्याङ्कक्रमभेदाभावान्नाङ्कक्रमभेदः कृतः।

(२) कथात्रये ऽपीत्यत्यनुमीयते।

सहितो वादेऽपदिष्ट इति। साधनमुपालम्भश्चास्मिन् भवतीति किं तावत् सिद्धिः साधनमुपालम्भनमुपालम्भः। अथ साध्यतेऽनेनेति साधनम् उपालभ्यते ऽनेनेत्युपालम्भः। यदि तावद्भावसाधनौ साधनोपालम्भशब्दौ तदा प्रमाणैस्तर्केण च न युक्तौ प्रमाणानां तर्कस्य च पराप्रतिपादकत्वात् प्रमाणान्यात्मप्रतिपत्तिसाधनानि परप्रतिपादनार्थश्चायं विचारः तस्मान्न प्रमाणैस्तर्केण च सिद्ध्युपालम्भौ भवतः अथ करणसाधनौ तथापि पञ्चावयवोपपन्न इति पृथक् न पठितव्यम्। किं कारणम् प्रमाणतर्कसाधनोपालम्भ इति करणसाधनेन पदेनावयवार्थस्योक्तत्वात् नान्यार्थत्वात् पञ्चावयवोपपन्न इत्यस्यान्योऽर्थः तथा च वक्ष्यामः। अथैतौ साधनोपालम्भशब्दौ भावसाधनौ किंविषयौ प्रमाणैस्तर्केण च क्रियेते। ननूक्तं पक्षविषयाविति पक्षविषयं साधनम् प्रतिपक्षविषय उपालम्भः सत्यमुक्तम् न पुनर्युक्तमुक्तम्। का पुनर्युक्तिहानिरत्र उपालम्भस्य प्रतिपक्षाविषयत्वात् प्रमाणतर्कसाधनासिद्धिः पक्षस्य भवतु न पुनरुपालम्भस्य प्रतिपक्षो विषयः न ब्रूमः प्रतिपक्षविषय उपालम्भ इति किन्तु साधनविषयः प्रतिपक्षस्य यत् साधनं तद्विषय उपालम्भ इति। कथं पुनः प्रतिपक्षसन्निधावपदिश्यमान उपालम्भशब्दः प्रतिपक्षव्यतिरेकेण साधनेन सम्बध्यते सामर्थ्यादसामर्थ्याच्च यदुपालम्भयोग्यं तदुपालभ्यते न च प्रतिपक्ष उपालम्भयोग्यः कथमिति उपालभ्यमानस्य चानुपालभ्यमानस्य च वस्तुनस्तथाभावात् तथाभूतमेव वस्तूपालभ्यमानं त***[१] दूषणानि लभ्यन्ते।

(१) अत्र कश्चिदंशो निपतितः प्रथमतृतीयादर्शपुस्तकयोरप्यत्र खण्डितत्वादत्र कियन्त्यक्षराणामपतितानीदानीं निश्चयो न भवति तानि शुद्धिपत्रे यथासम्भवं प्रदर्शयिष्यामः।

( पृष्ठे १५० पङ्क्तौ १० * * * एवंचिह्नितस्थले ऽधोलिखितस्य पाठस्य योगः कर्तव्यः )

—याभूतमेवानुपालभ्यमानं साधने ऽपि तर्हि तुल्यम् साधनमपि करणं तदपि स्वरूपं न कदाचिज्जहाति। तस्मात् साधनस्याप्युपालम्भो न युक्त इति। एवमनुपालम्भः करणे न कर्मणि कर्मणः स्वविषये सामर्थ्यात् सर्वं कर्म स्वविषये समर्थं करणमप्येवं तस्य तु विषयान्तरे न सामर्थ्यमस्ति। यच्च विषयान्तरे ऽसमर्थं न तेन कर्मणः करणस्य वा वैगुण्यम्। कस्य तर्ह्ययमुपालम्भो यो निगृह्यते। कश्च निगृह्यते पुरुषः। अप्रतिपत्तिविप्रतिपत्ती पुरुषस्य न कर्मणो न करणस्य सोऽयं प्रतिपादयितासमर्थयोः कर्मकरणयोरुपादानान्निगृह्यते। प्रतिपत्तापि यथाभिहितपदार्थाप्रतिपत्त्या। सोऽयं पुरुषधर्मो वचनद्वारेणोद्भाव्यत इति वचनमुपचर्य्य पुरुषधर्मवचनमुपालभ्यत इति। कथं पुनरयमर्थः सूत्रपदेन लभ्यते लभ्यत इत्याह। कथम् प्रमाणतर्कसाधनः प्रमाणैस्तर्केण च साधनस्योपालम्भः प्रमाणतर्कसाधनस्य प्रमाणतर्कसाधनोपालम्भस्य प्रमाणतर्कसाधनोपालम्भः एकस्य साधनशब्दस्य गम्यमानार्थत्वाल्लोपः यथोष्ट्रमुखीति। अथ प्रमाणतर्कसाधनोपालम्भ इत्यनेन पदेन जल्पवितण्डाभ्यां कथं वादो विभिद्यते। नन्विदं पक्षप्रतिपक्षपरिग्रहवत् त्रयाणामपि समानं भवति। न समानं वादे प्रमाणं वादे प्रमाणतर्कसाधनोपालम्भस्य नियतत्वात् प्रमाणतर्कसाधनोपालम्भ एव वादः। छलादिसाधनोपालम्भो जल्पवितण्डेव। यथा विषाणित्वं गवि गवये च समानमपि संहत्तकण्ठतया सास्नादिमत्तया च विभिद्यमानमुभौ गोगवयौ विभिनत्ति

तथा प्रमाणतर्कसाधनोपालम्भ इति । छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानाद्वादे निग्रहस्थानप्रतिषेधो विशेषविधानात् ततश्चानुपालम्भो वाद इति । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानाद्वादे ऽपि निग्रहस्थानानीत्यदोषः । उपालम्भग्रहणात् समस्तनिग्रहस्थानप्रसक्तौ सञ्ज्ञाभेदमात्रम् । यद्युपालम्भग्रहणाद्वादे निग्रहस्थानानि विद्यन्ते इति मन्यसे ननु सञ्ज्ञाभेदमात्रं जल्पाद्वादस्य न विशेषः । तथापि निग्रहस्थानानीष्यापीति नोत्तरयोर्नियमार्थत्वात् । यस्मादेवोपालम्भग्रहणेन समस्तानि निग्र—

अत एवानियमार्थे उत्तरे पदे आरभ्येते सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्चेति। सिद्धान्तविरुद्ध इत्यनेन किल पदेन विरुद्धो हेत्वाभासो लभ्यते तस्मान्यतोऽधिगतेः अन्य एवायं लभ्यते पञ्चावयवोपपन्न इति पञ्चग्रहणात् न्यूनाधिके लभ्येते अवयवग्रहणात् तदाभावो(१) लभ्यन्त इति। लभ्यमानस्यार्थस्य पुनरभिधाने पिष्टं पिष्टं स्यात् तस्मान्नायमर्थः। अथ किमिदं पदं सिद्धान्ताविरुद्ध इत्यनर्थकमेव (तस्मान्नायमर्थः)(२) नानर्थकमपसिद्धान्तावरोधात् सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति सोऽनेनावरुध्यते तस्मान्नानर्थकं कस्मात् पुनरयं नियमो वादे अवयवाभासापसिद्धान्तस्य निग्रहस्थानमिति। गुर्वादिभिः सह वादोपदेशान्नियमः यस्मादयं तत्त्वबुभुत्सुर्गुर्वादिभिः सह निर्विघ्नं फलमाकाङ्क्षन् वादं करोति ततोऽस्य बुभुत्सावतस्तावत्साधनं वक्तव्यम् यावदनेन ज्ञातव्यमप्रतिद्वन्द्वित्वात् प्रतिद्वन्द्विना सह न वादः किं तु जल्पः तत्र समस्तनिग्रहस्थानप्रयोग इति युक्तम्। प्रमाणतर्कसाधनोपालम्भ इत्यभिधानात् उभयोः सिद्ध्यसिद्धिप्रसङ्गः यदि प्रमाणतर्कसाधनोपालम्भो वादः उभयोर्वादिप्रतिवादिनोः प्रमाणतर्कसाधनोपालम्भाभिधाने नाधिकार इत्युभयपक्षसिद्ध्यसिद्धिप्रसङ्गः। नैष दोषः अप्रतिज्ञानात् नेदं प्रतिज्ञायते उभयोर्वादिनोः प्रमाणानि सन्तीति अपि तूभाभ्यां साधनं वक्तव्यमेतन्नियम्यते न पुनः साधनमेवैतद्भवतीति दूषणमप्येवम्। अपरे तु स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति वादलक्षणं वर्णयन्ति। अत्र च पक्षविशेषणार्थमुपात्तयोः स्वपरपक्षयोरनुपपत्तिर्वि-

(१) तदाभासाः—इति साधुः। (२) एतन्मध्यस्थः पाठोऽयुक्त इति सूचितम् २ पु०।

कल्पानुपपत्तेः समासासम्भवाच्च। एतौ खलु स्वपरशब्दौ परिग्रह-वर्जनार्थौ वा स्याताम् साधनीयदूषणीयार्थौ वा पूर्वोत्तरपक्षार्थव्यवस्थापकौ वा पक्षप्रतिपक्षावद्योतकौ वा प्रथमद्वितीयपक्षाभिप्रायकौ वा एकस्य वानेकविशेषणाभिसम्बन्धिनोऽनेकशब्दाभिधानमिति। तत्र परिग्रहपरिवर्जनार्थता तावदनुपपन्ना किमोर्थासम्भवात्। न परिग्रहार्थतायां किमोर्थः सम्भवति कस्यायं स्वो भविष्यति कस्य स्वार्थ इति स्वीकरणं परिग्रहार्थः यस्य स्वीकारो भवति तस्य स्व इति। तदेव चिन्त्यते किं तत् स्वीकरणमिति। ममेति प्रत्ययोत्पत्तिकारणभावाभावौ स्वपरशब्दार्थः निर्दिष्टः स्वार्थो नरस्य स्वं न हि शास्त्रकारस्य स्वः परो वा सम्भवति यदर्थमिदं स्यादिति। यच्च यस्य स्वं भवति तत्तस्यासिद्धार्थं किञ्चिदुपकरोति न पुनः स्वामिनः पक्षेण कश्चिदुपकारः क्रियते तस्मात् परिग्रहवर्जनार्थौ तावत् स्वपरशब्दौ न भवतः। साधनीयदूषणीयार्थौ स्वपरशब्दाविति चेत् अथापीदं स्यात् साधनीयः स्वपक्षो दूषणीयः परपक्ष इति। अहो शास्त्रार्थकौशलं साधनीयः साध्यः स्यात् साधनीयः स्वपक्ष इति कुत एतत् लक्षणं चैतत् पक्षस्य साधयितुमिष्टः पक्ष इति साधनीयशब्देनापि तदेवोच्यते व्यवच्छेदार्थं चेदनुच्यते स्वपक्षः परपक्ष इति परपक्षाच्चायं स्वशब्देन व्यवच्छेद्यमानेन समानमर्थं शक्नोति वक्तुम् व्यर्थं वा विशेषणम् सामान्यशब्दा अपि विशेषे वर्तन्त इत्यदृष्टमेतत् न ते सामान्यशब्दा ये विशेषेषु वर्तन्त इति किन्तु प्रमाणादिभेदानुविधायिनो विशेषशब्दा एव अपि च साधनीयः पक्षः स्वपक्षः दूषणीयः पक्षः परपक्षः। एतदपि न बुध्यामहे साधनीय-

शब्दस्य पक्षविषयत्वात् साधनीयः पक्षो भवतु दूषणं तु न कदा-
चित् परपक्षेण सम्बध्यते परपक्षस्य तादवस्थ्यात्। अथ दूषणस्य को
विषयः कश्चित् स्थापनाविषय इति किञ्चिद्दूषणं स्वपरपक्षाभ्याम-
सम्बद्धमेव। कतमद्दूषणं स्थापनया सम्बध्यते का चेयं स्थापना चेति
स्थापना पञ्चावयवं पक्षसाधकं वाक्यम्[1] वाक्यदोषो दूषणं तद्वाक्यं
न्यूनमधिकं च भवति अवयवाभासोपपन्नञ्च तदुद्भावनं दूषणमेतत्
स्थापनया सम्बध्यते तद्विषयत्वात्। शेषं तु दूषणं न स्थापनया न
स्वपरपक्षाभ्यां सम्बद्धम् उत्तरदोष आक्षेपभावश्चेति। सत्यं न साक्षात्
पक्षस्य दूषणेनाभिसम्बन्धः स्थापनानिवृत्तिद्वारेण तु प्रवर्तमानं
दूषणं न पक्षं निवर्तयति स्थापनानिवृत्तेः परपक्षं दूषयतीत्युच्यते
उपचरितशब्दप्रयोगो लक्षणेऽनुपपन्नो लक्षणस्य तत्त्वविषयत्वात्
तत्त्वव्यवच्छेदकं लक्षणम् न पुनरुपचरितशब्दप्रयोगेन व्यवस्थास्ति।
यदि च पारम्पर्येण प्रवृत्त्या प्रवर्तमानं दूषणं परपक्षं निवर्तयति
तदेवं वक्तुं कर्त्तुं परपक्षाद्ध्यर्थं वचनं वाद इति। एवमभिधीयमाने
किं भविष्यतीति लघु च सूत्रं भवतीत्युभयोश्च साधनदूषणयोः
पारम्पर्येण परपक्षासिद्ध्यर्थतेति। अथ माभूदुभयत्र पारम्पर्यमिति
स्वरूपत एवं वक्तव्यम्। पक्षस्थापनासिद्ध्यसिद्ध्यर्थं वचनं वाद इति।
एवं हि स्पष्टता लक्षणस्य यथाविषयं चाभिसम्बन्ध इति स्थापनापि
न पूर्वं दूषणं सम्बध्यत इति दोषतादवस्थ्यम् कश्चित् सम्भवात्।
किञ्च दूषणं स्थापनया सम्बध्यत इति सामान्याभिधानेऽपि साम-
र्थ्यान्नियमः तस्मादिदमनुपपन्नम्। साधनीयदूषणीयार्थौ स्वपर-

(१) वाक्यम्—पा० १ पु०।

शब्दाविति स्वपरशब्दौ पूर्वोत्तरपक्षार्थौ भविष्यत इति यदुक्तम्भवति पूर्वोत्तरपक्षाविति न युक्तमेतदपीति साधनदूषणयोर्नियमाभ्युपगमात् तेन साधनदूषणैरित्येतस्मिन् सूत्रे साधनदूषणयोर्नियमाभिधानं स्वपक्षसाधनं परपक्षे दूषणमिति। एतस्मिंश्च नियमत उत्तरविषयं प्राप्नोति तेनोत्तरपक्षवादी स्वमेव पक्षं दूषयतीति प्राप्तम्। स्वपक्षश्चोत्तरवादिनः पूर्वपक्षादन्य इति स्वपरे शब्दाभ्यां(१) पूर्वोत्तरपक्षयोरभिधानमिति न पदार्थौ न परिभाषने रूढिः। एतेन पक्षप्रतिपक्षार्थता प्रथमद्वितीयपक्षार्थता च व्याख्याता। एक एवायं पक्ष इति विशेषणद्वययोगात् साध्यतया दूष्यतया च विशेष्यमाणः स्वपरशब्दवाच्य इति युक्तमेतद्विवचनं तु न युक्तम्। एकस्यानेकविशेषणयोगो न प्रतिषिध्यते द्विवचनं तु न भवतीति ब्रूमः न ह्येकस्यानेकविशेषणाभिसम्बन्धे सति द्विवचनबहुवचने भवतः नहि देवदत्तं छत्रदण्डाभ्यां समुपलभ्य वक्तारो भवन्ति(२) छत्रिदण्डिनावागताविति तदेवं विकल्पानुपपत्तेः स्वपरशब्दानुत्पत्तिः समासासम्भवाच्च। स्वपरपक्ष इति समासपदमेतत् तत्र तावद्विशेषणविशेष्यस्वरूपानवगते षष्ठीसमासः यत्र पुनः षष्ठी समस्यते तत्र विशेषणं विशेष्यात् पृथगवधार्यते यथा राजपुरुष इति भेदाच्च यत्र च विशेषणविशेष्यभाव इति तत्र भेदो दृष्टो राजपुरुषवदेव असत्यपि भेदे दृष्ट इति चेत् असत्यपि भेदे दृष्टः षष्ठीसमासः तद्यथा सेनापतिः पानकाङ्गमिति तच्च नानभ्युपगमात् को हि सुस्थात्मा पानकशब्दार्थमङ्गेभ्यो नार्थान्तरं प्रतिपद्यते सेनां च सैनिकेभ्य इति। यथा च

(१) स्वपरशब्दाभ्याम्। (२) वदन्तीति साधुः।

खेमादीन्यर्थान्तरभूतानि तथोक्तं गुणगुणिवाद इति। अथ मन्यसे नार्थः शब्दस्यार्थः पक्षशब्दस्येति तन्नापोदितत्वात्। यथा स्वार्थवाचकः शब्दो न भवति तथोक्तम्, तस्मान्न षष्ठीसमासः। एतेन कर्मधारयः प्रत्युक्तः। स्वश्चासौ पक्षश्चेति विशेषणस्वरूपासिद्धेर्भेदाभावाच्च। एतेन बहुव्रीहिरपि प्रत्युक्तः। साधयितृविषयस्य साधनं प्राप्नोति अतो न बहुव्रीहिः। ननु च साधनीयता स्वार्थः पक्षविशेषणत्वेन सम्भवति न सम्भवति पर्यायत्वात् साधनीयः पक्ष इति पर्याय एव न च पर्यायशब्दैः समानाधिकरणो बहुव्रीहिः सम्भवति नहि भवति वृक्षस्तरुं छिनत्तीति विरोधाच्च। यदि तावदयं पक्षशब्दः स्वपक्षाश्रिघते परपक्षवचनं प्रतिज्ञेति व्याघातः। किं कारणम्, प्रतिज्ञायाः स्वपक्षविषयत्वात्। अथाभिन्नस्तथापीदं न प्राप्नोति स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति न चान्यः समासः सम्भवति न चेदं वाक्यम्, तस्मात् स्वपरपक्षयोरित्यसारम्। आस्तां तावत् स्वपरशब्दार्थौ विशेषणविशेष्यभावस्य स्वपरशब्दयोः। अथ समासः कस्मान्न क्रियते स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति किमेवं कृते भवति स एवार्थो लाघवं च। अत्र केचित् परिहारं ब्रुवते। यदि किल समासः क्रियते उभयाश्रिते सिद्ध्यसिद्धी भवतः न दोषतादवस्थ्यात् नायं दोषः समासकरणेन परिह्रियते कथमिति स्वपक्षसिद्ध्यसिद्ध्यपरपक्षसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थमिति नासामर्थ्यात् न ह्ययं समासः समर्थः स्वपक्षसिद्ध्यसिद्ध्यर्थमिति कस्मात् व्याहतत्वात् यदि सिद्ध्यर्थं यततेऽसिद्ध्यर्थमिति व्याघातः यद्यसिद्ध्यर्थं यतते सिद्ध्यर्थमिति व्याघातः यद्यसामर्थ्यान्न समासः

समासेऽपि(१) तत्सामर्थ्यात् नोभयपक्षसिद्ध्यसिद्धिप्रसङ्गः । एकवचनबहुवचनप्रसङ्ग इत्यन्ये । यदि किल समासः क्रियेत समासोऽनभिव्यक्तवचनभेदः तस्माद्वचनभेदव्यक्तिनिमित्तोऽसमासः । कथं नाम स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः स्यात् न स्वपरपक्षाणां न स्वपरपक्षस्येति नासम्भवादेकस्य सिद्ध्यर्थं वचनमेवास्ति स्वपरपक्षाणां साधनमनुमानमेकमिति तथाप्येषा नाव्यक्तोऽस्थाने चाशङ्का । अनित्यः समासविधिरित्यपरे । अपरे समासविधेरनित्यतां वर्णयन्ति । एवमाहुः । नायमवश्यं विधिः सर्वत्र समास इति । क्वचित् समासः क्वचिच्च वाक्यम् यथा च राज्ञः पुरुषः राजपुरुष इति समासः । न तूभयप्राप्तिरसमासः कस्मात् अनित्यः समासविधिरिति एवं ब्रुवतोक्तं भवति प्राप्तमुभयम् अथोभयप्राप्तौ कस्मादसमास इति समासः कस्मादनिवृत्तोऽनुयोगः नानिवृत्तो लाघवार्थत्वात् समासे लाघवा(२) समासे गौरवम् अनुगत्यर्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं वाच्यम् । वयं गुरुलाघवानभ्युपगम इति चेत् नायं परिहारोऽनुयोगस्यानिवृत्तेः वयं गुरुलाघवानुयोगं न प्रतिपद्यामह इति चेत् न निवर्त्यतेऽनुयोगः कस्मादिति शास्त्रत्वेन च वादाभिधानमभ्युपगम्यते न च वयं गुरुलाघवमाश्रीयत इति न युक्तम् सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तम् कस्मात् द्वेधानुपपत्तेः अयं खल्वसिद्धिशब्दः कल्प्यमानो द्वेधा कल्प्येत व्यक्तावुत्पत्तौ वा तत्र तावदुत्पत्तौ युज्यते प्रतिज्ञादिकस्य साधनस्य साधनहानिप्रसङ्गात् नहि प्रतिज्ञादिसाधनेन वस्तूत्पाद्यते किं तु

(१) समासेऽपि—इति वाचस्पतिसम्मतः पा० ।
(२) लाघवमसमासे इति साधुः ।

विद्यमानप्रकाशकत्वं साधनार्थः स हीयते सिद्धावुत्पत्तौ कल्पितायामिति। व्यक्ताविति चेत् नाधिकरणाधारत्वात्। अथ मन्यसे सिद्ध्यसिद्धिर्व्यक्तिर्नोत्पत्तिः युक्तमेतदुत्तरं तु व्याहतं भवति अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति ये चैतेऽधिकरणप्रत्यायनलक्षणे सिद्ध्यसिद्धी तेऽधिकरणे वर्तमाने पक्षस्य कथं सपक्षस्य भवत इति षष्ठ्यर्थो वाच्यः स चायं दुर्वचः तद्विषयत्वात् तयोः सिद्ध्यसिद्ध्योः पक्षो विषयः अतस्तद्विषयत्वात्तस्येति। न युक्तमेतत्। ये एते सिद्ध्यसिद्धी पक्षविषये किं तावत् पक्षे सिद्धे उतासिद्धे यदि तावत् सिद्धे नाधिकरणप्रत्यायनं सिद्धिः किन्तर्हि यतस्तत्प्रत्यायनं स सिद्धिः कुतश्च तद्भवत्यर्थस्य तथात्वात् यस्मात् सोऽर्थस्तथा भवति कथं तथा भवति यथा प्रमाणैरभिसम्बद्ध इति यत् प्रमाणैरविसंवादित्वं स तथाभावः[1]। अथासिद्धे पक्षेऽधिकरणप्रत्यायनं भवति साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं स्यात् पक्षस्य सिद्धिरधिकरणप्रत्यायनम् असिद्धिस्तु कथम् नहि परपक्षसिद्धिर्दूषणेन क्रियत इत्युक्तम् स्थापनानिवृत्तेरुपचार इति चेत् स्थामतिर्दूषणं[2] प्रयुज्यमानं साक्षात् स्थापनां निवर्तयति स्थापनानिवृत्तेस्तु परपक्षनिवृत्तिरुपचर्यत इति न प्रयोजनाभावात्। नहि प्रयोजनमन्तरेण मुख्यार्थव्यतिक्रमो लभ्यते अपि तु प्रमाणासम्भवेनोपचारो मञ्चाः क्रोशन्तीति यथा लोकप्रयुक्तशब्दविषयश्चोपचारः लोकगत्या शब्दार्थः न चेदं लौकिकं वाक्यं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः। अपरे तु प्रतिज्ञातार्थाज्ञापनं पक्षस्यासिद्धिं वर्णयन्ति तद्य-

(१) तथाभाव इति साधुः।  (२) स्थाप्यतिरिति साधुः।

धिकरणविषयं न निवर्तते प्रसङ्गः कथं पक्षस्यासिद्धिरिति सिद्धि-वत्प्रसङ्गः तस्मात् सिद्ध्यसिद्धी पक्षस्य धर्मावेव यत एतद्भवति सिद्धः पक्षोऽसिद्धश्चेति एवं सति दृष्टान्ते व्याघातः। यदि सिद्ध्यसिद्धी पक्षधर्मौ दृष्टान्ते सिद्ध्यसिद्धी इति व्याहतं भवति। अथ माभू-द्व्याघात इति दृष्टान्ते एव ते तथापि पक्षस्य व्यक्ताव्यक्तौ सिद्ध्यसिद्धी इति व्याहतम्। अथ तथा तथा ते पदार्थस्य सिद्ध्यसिद्धी तथा-प्यधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति व्याहतं भवति। के पुनरेते व्यक्ताव्यक्तौ वस्तुधर्मावभिधानप्रत्ययहेतू य एतावभिधानप्रत्ययौ व्यक्तो व्यक्तश्चेति भवतः ते व्यक्ताव्यक्तौ इति। अर्थशब्दानुपपत्ति-र्विकल्पानुपपत्तेः। अर्थशब्दः खलु प्रवर्तमानस्त्रेधा प्रवर्तते उद्देश-प्रयोजनाभिधेयविषयत्वेन उद्देशे तावदर्थशब्दो यथा ब्राह्मणार्थं भक्त इति। एवं चतुर्विधवाक्यं सङ्ग्रहः प्रयोजनेऽर्थशब्दः किमर्थमा-गतोसीति अभिधेयेऽर्थशब्दो यथा गौरित्यभिधानस्य कोऽर्थ इति। तत्र तावदुद्देशे सम्भवति युक्तायुक्तत्वेनेति विशेषितत्वात् स्वपक्षस्य युक्तत्वेन परपक्षस्यायुक्तत्वेनेत्येवं विशेषिते उद्देशशब्दार्थः न त्वयं युक्तायुक्तशब्दो दूषणाभासे वा साधनाभासे वा सम्भवति साधन-योगो युक्तता दूषणयोगोऽयुक्ततेति। अथ पुनः शब्दार्थस्य तथा-त्वातथात्वे युक्तायुक्तत्वे युक्तत्वं तथाभावोऽयुक्तत्वमतथाभाव इति तथापि तयोः कर्मतयोपादानात् युक्तत्वेनाधिकरणप्रत्यायनमयुक्तत्वेन वेति व्याघातः नहि प्रत्याय्यं प्रत्यायनं भवतीति। अथ प्रयोजनेऽर्थशब्दः तथापि साधनदूषणाभासवादिनोऽवादिता स्यात्। किं कारणम्, सा-धनदूषणाभासयोः सिद्ध्यसिद्ध्यप्रयोजनत्वात् नहि साधनदूषणाभासयोः

सिद्ध्यसिद्धी प्रयोजनम्। एवं च तद्वादी अवादी स्यात् तथा चावादी निगृह्यत इति दोषः। अथाभिधेयेऽर्थशब्दप्रयोगः अभिधानस्वभावानवक्लृप्तेरित्ययुक्तमेतदपि नहि ग्रन्थकारभाष्यकाराभ्यां विशेषितमेवं प्रकारमभिधानं सिद्ध्यसिद्ध्योर्वाचकमिति। ननु विशेषितं येन सिद्ध्यसिद्धी अभिधीयेते तत्तयोर्वाचकतेति सत्यमुक्तम्, एवं तु सिद्ध्यसिद्धी इत्येतेऽभिधाने वादः प्राप्तः न चान्योऽर्थशब्दस्यार्थ इति। तस्मादर्थशब्दोऽप्ययुक्त इति। सिद्ध्यसिद्ध्यर्थं वचनं वाद इति ब्रुवाणेन पूर्वमुत्तरं वा नालोचितम् नैयायिकहेतुप्रतिषेधेन विशेष्यं वचनमित्यभ्युपगमसिद्धं पुनः सूत्रमिति। समस्तवचनविशेषणार्थमिति व्याघातः। तदेवमेतानि सूत्रपदानि विचार्यमाणानि स्वतन्त्रव्याघातकानीति स्लोकं च साधन्त इति। एवं तावत् सौत्राणि पदानि स्वेन न्यायेनासमर्थानि यथा च वृत्तिपदानि असम्बद्धानि तथेदमुच्यते स्वस्य पक्षस्येति स्वार्थासिद्धेरयुक्तम्, स्वार्थस्य प्रतिषिद्धः अतोऽर्थं स्वस्य पक्षस्येति यदपि षष्ठीसप्तमीवचनयोस्तुल्यरूपत्वात् षष्ठीलक्षापनार्थं स्वस्य पक्षस्येति तदप्ययुक्तम्। अधिकरणार्थासम्भवात् नहि पक्षव्यतिरेकेण पक्षे किञ्चित् साध्यं सम्भवति तस्मादप्रसक्तः सप्तम्यर्थः तदप्रसक्तौ विशेषणानर्थक्यमिति युक्तायुक्तत्वेऽनुपपत्तिश्च विकल्पानुपपत्तेः युक्तायुक्तत्वे साधनदूषणे वा स्याताम् साधनदूषणाभ्यां वा योगः पदार्थस्य वा तथा तथा चेति। तत्र तावत् साधनदूषणे युक्तायुक्तत्वे कस्मात् साधनदूषणयोः पृथगभिधानात् ते साधनदूषणेरिति पृथगुक्ते साधनदूषणे युक्तायुक्तत्वशब्दाभ्यां च साधनदूषणयोरभिधानमिति ते साधनदूषणेरिति सूत्रमुच्चार्यम्

चरितार्थत्वादिति। अथ मन्यसे तयोरेव युक्तायुक्तयोर्विशेषणार्थं त साधनदूषणैरिति न प्रथमाभिधानप्रसङ्गात्। यदि युक्तायुक्तत्वविशेषणार्थं ते साधनदूषणैरिति सूत्रं प्रथमैव न्याय्या ते साधनदूषणानीति नहि विशेषणविशेष्यभावे भवति नीलमुत्पलैरिति। योग इति चेत्। अथ साधनदूषणाभ्यां योगो युक्तत्वायुक्तत्वे इत्येवं चेन्मन्यसे तस्यानिर्देशात् साधनदूषणाभ्यां योगो निर्दिष्ट एवंविध इति अनिर्देशादयुक्तमेतत् साधनयोग इति च कदा भवति यदासौ निर्णीतः पदार्थः तदा च न साधनार्थः कश्चिदस्तीति न युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति व्याघातादतो न योगः। अपदार्थस्य तथातातथाते युक्तायुक्तत्वे तदपि न करणार्थस्यासम्भवात् ये तथात्वातथात्वलक्षणे युक्तायुक्तत्वे ते व्यवच्छेद्ये न तु व्यवच्छेदस्य साधने तस्मात् करणार्थो नास्त्यतो युक्तायुक्तत्वस्येति युक्तं वक्तुमिति। अधिकरणप्रत्यायनमिति तु न युक्तम् शास्त्रसम्बन्धाप्रयुक्तत्वात् शास्त्रं सम्बन्धं कुर्वाणेनोक्तं सन्देहविपर्ययप्रतिषेधार्थः शास्त्रस्यारम्भ इत्येतन्निरपेक्षेणेदमुच्यते अधिकरणप्रत्यायनं सिद्धासिद्धौ इति न च प्राश्निकेषु संशयविपर्ययौ स्तः परिच्छेदकत्वात् तस्माच्च प्राश्निकाः प्रत्याय्या इति यच्चोक्तं प्राश्निकप्रत्यायनादेव प्रतिवादिप्रत्यायनं कृतं भविष्यतीति। किं कारणम्, प्रतिवादी किल पक्षरागात् सन्तमप्यर्थं न प्रतिपद्यते सन्तमप्यर्थं न प्रतिपद्यते इति व्याहतमुच्यते कथं चान्यथा प्रतिपक्षः सन्नित्यभिधीयते। अथ प्रतिपद्यमानोऽपि परस्य न कामकारं ददाति तथापि न प्रतिपद्यत इति व्याहतमुच्यते यच्च प्राश्निकप्रत्यायनात् तत्प्रत्यायनमिति तदपि न

प्रतीतेः करणभेदात् प्राश्निकप्रतीतेरन्यानि करणानि अन्यानि प्रतिवादिप्रतीतेरिति न चान्यविषयस्य करणस्य क्रियेति नियमाभावाच्च । नायं नियमः प्राश्निकप्रत्यायनार्थ एव वादः प्राश्निकानन्तरेणापि गुर्वादिभिः सह वादो दृष्ट इति । यदा त्वयं न तत्त्वबुभुत्सुर्लाभपूजाख्यातिकामो वादमारभते तदा प्राश्निकैः प्रयोजनमस्तीति सत्यमस्ति प्रयोजनं वादस्तु न भवतीति न चैविध्यानभ्युपगमात् एक एवायं कथामार्गः तस्य प्रयोजनं तत्त्वावबोधो लाभादयश्च न प्रतिषेधात् प्रसिद्धस्तुतिमानलाभलिप्सोर्वादः यदपीदमुच्यते न चैविध्यानभ्युपगमादिति नानभ्युपगमायत्तः पदार्थसद्भावः अपि तु सद्भावे सत्यभ्युपगम इति यथा च चैविध्यं कथामार्गस्य तथा लक्षणभेदाद्वा जल्पवितण्डयोर्भेदमुपपादयिष्यामः । तस्माद्व्याख्या विशेषमुच्यते चैविध्यानभ्युपगमादिति यच्चोक्तं पक्षसिद्धिविषयं प्रत्यायनं पक्षसिद्धिशब्देनोपचरितं यथा शून्यताविषयः समाधिः शून्यतेति न कामत उपचारो लभ्यते अपि तु प्रमाणसम्भवेन लोकप्रयुक्तशब्दाख्यानमुपचारः उक्तं च नोपचरितशब्दप्रयोगो लक्षणे उपपन्न इति । तदर्थं वचनमित्येतदपि किल चतुर्विधवाक्यज्ञापनार्थमुक्तम् साधनं साधनाभासो दूषणं दूषणाभासश्च सम्भन्त्स्यत इति । तदयुक्तम् युक्तायुक्तत्वेनेतिविशेषितत्वात् एवं विशेषिते तस्मिन् कुतश्चतुर्विधवाक्यसंग्रह इति अधिकरणं पुनर्यौ वादिप्रतिवादिभ्यामधिक्रियत इत्यधिकरणार्थो वक्तव्यः न हि वादे प्राश्निकार्थं किञ्चिदस्तीति प्रत्यायनाधारत्वादधिकरणमिति चेत् नोक्तोत्तरत्वात् पक्षविषयं प्रत्यायनं न प्राश्निकविषयमिति तस्मिन् सति भावादिति चेत् नान्यथापि

दर्शनात् अन्यथापि गुर्वादिभिः सह दृष्टो वाद इति तद्वादे परीक्षा का कस्य केति वक्तव्यम्। साधनदूषणप्रयोगः स्थापनाविषयो वाद इति तस्य परीक्षा साधनदूषणतदाभासपरिज्ञानम् तदर्थमधिकारः तस्मिन्निति सन्नर्थी नास्ति यदपि प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि वादप्रसङ्ग इति चोद्यं कृत्वा प्रतिसाधनमुक्तम् तत्सिद्धसिद्धिर्भ्यां साक्षात् पारम्पर्येणासम्बन्धायुक्तायुक्तविशेषणाभावमङ्गमुत्तरेण लक्षणपदार्थाभिधायिनो दूषणः स्वरूपतः पूर्वापरयोरसम्बन्धादिति। यदि लक्षणस्योत्तरं वाक्यम् तत एवं वक्तव्यम् न सूत्रार्थापरिज्ञानादिति तदेतत्सूत्रं विचार्यमाणं सहवार्त्तिकं न युक्ता सङ्गच्छत इति यथान्यायमेवास्तु ॥

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ ४३ ॥ (2)

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। समस्तं वादलक्षणं छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति[१]। यथोक्तोपपन्न इति न युक्तम् जल्पनिग्रहस्थाननियमस्थानभ्युपगमात् यद्येवमुच्येत स च तर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः छलजातिनिग्रहस्थानोपालम्भो जल्प इति न युक्तमेवं भवितुम्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च पदयोरुपालम्भश्रवणात् समस्तनिग्रहस्थानप्रसक्तौ नियमार्थत्वात् नियमार्थे एते पदे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति जल्पे च नियन्तव्यं न किञ्चिदस्ति तस्मान्नियमार्थे एते पदे नातिदेष्टव्ये

(१) साधनोपालम्भश्छलजल्प—पा० २पु०।

इत्यतो न वक्तव्यम् यथोक्तोपपन्न इति नैष दोषः सम्भवतोऽतिदेशात् यत्र सम्भवति तदतिदिश्यते किञ्च सम्भवति प्रमाणतर्कसाधनोपालम्भ इत्येतत् तस्माद्यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः यथान्यत्रानेकद्रव्येण समवायाद्रूपविशेषाच्च रूपोपलब्धिरित्यनेन सम्बन्धस्पर्शेषु ज्ञानं व्याख्यातमिति न स्वरूपविशेषोऽतिदिश्यत इति अपि त्वनेकद्रव्यद्रव्यसमवायमात्रं स्वगतो विशेषः सामर्थ्यात् तथेहापि यत् समर्थं तदतिदिश्यते समर्थं च लक्षणं तस्मात् तदतिदिश्यते न नियमार्थे पदे नियन्तव्यस्य बाधात्। अथवा यथोक्तोपपन्नेनोपपन्नो यथोक्तोपपन्नोपपन्न इति प्राप्ते गम्यमानत्वादेकस्योपपन्नशब्दस्य लोपः यथा गोरथ इति केन पुनरयं गम्यत इति उक्तं सामर्थ्येनेति। न हि नियमार्थयोः पदयोर्जल्पसम्भवः तस्मान्न ते अपदिश्येते इति भाष्यमिदानीं कथं न सूत्रपाठानुक्रमज्ञापनार्थत्वाद्भाष्यस्य एतस्मिन् सूत्रे यदुपपन्नं लक्षणत्वेन तदतिदिश्यत इति। छलजातिनिग्रहस्थानैर्नैकस्य कस्यचित् साधनमुपालम्भो वा युक्तोऽयुक्तोत्तरत्वात्। छलं तावत् न साधनोपालम्भायालम् कस्मात् अयुक्तोत्तरत्वात् अयुक्तमुत्तरं छलं तस्मान्न साधनोपालम्भायेति एवं जातिः। अङ्गभाव इति चेत् अथापीदं स्यात् यत्तत् प्रमाणतर्कैः साधनोपालम्भः तस्यैतानि प्रयुज्यमानानि छलजातिनिग्रहस्थानानि रक्षणार्थत्वादङ्गं भवन्तीति तदप्ययुक्तोत्तरत्वादनुपपन्नम्। किमर्थं तर्हि प्रयोगः यद्येतानि छलजातिनिग्रहस्थानानि साधनोपालम्भयोर्न साधनमङ्गं वा किमर्थमेतेषामुपपादनमिति साधनविघातार्थम् साधनं विहनिष्यामीति अनया धियापहतः प्रवर्तते यत्र चैतानि छलजातिनिग्रहस्थानानि

प्रयुज्यन्ते न स वादः न पुनरेतदभिधीयते छलजातिनिग्रहस्थानानि साधनमङ्गानि वेति साधु साधनोपादाने परेणाकुलितबुद्धिः छलवादी नियुक्तं कदाचिच्छलादिभिराकुलीकृतस्य पराजयोऽपि स्यात् न पुनरेतानि तत्त्वबुभुत्सुना वक्तव्यानि किं तु विजिगीषुणेति । सोऽयं पक्षप्रतिपक्षपरिग्रहच्छलजातिनिग्रहस्थानप्रयोगाप्रयोगाभ्यां भिद्यमानो वादो जल्पो वितण्डा च भवति । यथापि विरुद्धौ धर्मावेकाधिकरणस्थाविति समानम् विरुद्धयोर्धर्मयोरेकाधिकरणत्वानुपपत्तिः उभयस्वभावासम्भवात् यदि विरुद्धावेकाधिकरणौ धर्मौ भवतः तदेकं वस्तूभयस्वभावम् न चैतदस्ति तस्मान्न विरुद्धौ धर्मावेकाधिकरणाविति। नाध्यारोपितस्वरूपधर्मप्रतिपत्त्या तदुपपत्तेः एकस्तु धर्मः स्वरूपत एकस्याध्यारोपितस्वरूपप्रवृत्तिः तस्मादुभयधर्मा धर्मौ किमुक्तं एकधर्मिस्थौ विरुद्धार्थाविर्त्येतदपि न बुध्यामहे को विरुद्धार्थ इति न स्वरूपविपर्ययोपपत्तेः न स्वरूपमात्रविपर्ययो विरोधः पुनर्बाधा वध्यघातकभावो वेति ॥

## स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ४४ ॥ (३)

स प्रतिपक्षस्थापनाहीनो वितण्डा। प्रतिपक्षस्थापनाहीन इति यावदुक्तं भवति द्वितीयपक्षवादी वैतण्डिको न किञ्चित् पक्षं स्थापयति। अपरे तु ब्रुवते दूषणमात्रं वितण्डेति। दूषणमात्रमिति चात्र शब्दप्रयोगाद्वैतण्डिकस्य पक्षोऽपि नाप्नोति युक्तं चैतत् यदर्थस्याभ्युपगमात् दूषणमभ्युपगच्छन् दूष्यमभ्युपैति यथार्थावबोधं प्रतिपद्यते प्रतिपादयितारं प्रतिपत्तारं च दूषणमात्राभ्युपगमे सति

सर्वमेतन्न स्यात् दूषणमात्राभ्युपगमाच्छेषमर्थतोऽवगम्यत इति वितण्डा वितण्डेत्येवं वक्तव्यम् यथा वितण्ड्यते सा वितण्डेत्यनुगतार्थया स-ञ्ज्ञयैव परप्रतिपत्तिविघातः क्रियत इति तस्मात् यथा न्यासमेवास्तु न्याय्यम्॥

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः॥ ४५॥ (4) Ny S. I.2.

हेतुलक्षणाभावादहेतवोऽहेतुसामान्याद्धेतुवदाभासमानास्त इमे सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः। किं पुनर्हेतुभिरहेतूनां सामान्यं येन हेतुवदाभासन्त इति। प्रति-ज्ञानन्तरं प्रयोगः सामान्यं यथैव हेतवः प्रतिज्ञानन्तरं प्रयुज्यन्ते एवं हेत्वाभासा अपीत्येव सामान्यम् अन्यतमलिङ्गधर्मानुविधानं वा यदा तत्साधनस्य लिङ्गस्य त्रैविध्यम् तत्रैकतमधर्मानुविधानम् द्विलक्षणस्यान्यतरधर्मानुविधानं विवक्षितम्। साधकासाधकत्वे तु विशेषः हेतोः साधकत्वं धर्मोऽसाधकत्वं हेत्वाभासस्य किं पुनस्तत् समस्तलक्षणोपपत्तिरसमस्तलक्षणोपपत्तिश्च कः पुनरस्य सूत्रस्यार्थः। विभागोद्देशो नियमार्थ इत्युक्तम्। किं पुनर्विभागोद्देशेन नियन्त-व्यम् अनेकधा प्रसृतस्य हेतुहेत्वाभासस्य विस्तरः संक्षेप्तव्यमिति कियता पुनर्भेदेनायं हेतुहेत्वाभासः प्रसृत इति। कालपुरुषवस्तु-भेदानुविधानेनापरिसंख्येयः सामान्यतः साध्यवस्तुपक्षपक्षहेतुहेत्वा-भासभेदः प्रपद्यमानः षट्सप्ततिशतम्। तत्र साध्यव्यापकधर्मभेदः षोडशधा। साध्यैकदेशवृत्तिधर्मोऽप्येवम्। एवं साध्यावृत्तिधर्मभेद इति।

विशेषणविशेष्याविरुद्धभेदाच्चतुःषष्टिः । एवं समर्थासमर्थविशेषणविशेष्यभेदादिति । तत्र साध्यव्यापकधर्मभेदानां षोडशानामुदाहरणानि साध्यतज्जातीयान्यव्यापकः प्रमेयत्वान्नित्योऽनित्यो वेति । साध्यतज्जातीयव्यापको विपक्षैकदेशवृत्तिः गौरियं विषाणित्वात् । साध्यतज्जातीयव्यापको विपक्षावृत्तिः अनित्यः शब्द उत्पत्तिधर्मकत्वात् । साध्यव्यापकस्तज्जातीयावृत्तिः विपक्षव्यापकः नित्यः शब्दः उत्पत्तिधर्मकत्वात् । साध्यव्यापकस्तज्जातीयावृत्तिः विपक्षैकदेशवृत्तिः नित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात् द्व्यणुकवत् । साध्यव्यापकस्तज्जातीयविपक्षावृत्तिर्यथा नित्यः शब्दः सामान्यविशेषवत्त्वे सति श्रावणत्वात् घटादिवत् । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिः विपक्षव्यापकश्च अगौरयं विषाणित्वात् । साध्यव्यापकस्तज्जातीयविपक्षैकदेशवृत्तिः नित्यः शब्दोऽस्पर्शवत्त्वात् । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् सामान्यविशेषवत् सामान्यविशेषसमवयवानां निराकरणम् अस्मदादिप्रत्यक्षत्वादिति परमाणूनां बाह्यकरणप्रत्यक्षत्वादित्यात्मनः साध्यतज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदेनैकान्तवादिनः अनित्यः शब्द उत्पत्तिधर्मकत्वात् । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः अनित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात् । साध्यव्यापकस्तज्जातीयावृत्तिरविद्यमानविपक्षः अनित्यः शब्दः श्रावणत्वात् । साध्यव्यापकोऽविद्यमानसजातीयो विपक्षव्यापकः नित्यः शब्द उत्पत्तिधर्मकत्वात् । साध्यव्यापकोऽविद्यमानसजातीयो विपक्षैकदेशवृत्तिः नित्यः शब्दो बाह्येन्द्रियप्रत्यक्ष-

त्वात्। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षावृत्तिः नेदं निरात्मकं जीवच्छरीरम् अनिन्द्रियाधिष्ठानत्वप्रसङ्गात् पक्षव्यापकोऽविद्यमान-सपक्षविपक्षः सर्वं नित्यं प्रमेयत्वात्। त एते पक्षव्यापकाः षोडश। एषां पञ्च हेतवः शेषा हेत्वाभासाः तत्रान्वयव्यतिरेकिणौ द्वौ विपक्षावृत्ती तृतीयनवमौ एकान्तवादिनोऽन्वयिनावेव दशमैकादशौ व्यतिरेकी पञ्चदश इति।

अथ साध्यैकदेशवृत्तयः साध्यैकदेशवृत्तिसजातीयविपक्षव्यापकः पृथिव्यप्तेजोवाय्वाकाशानि अनित्यानि अगन्धवत्त्वादिति साध्यैक-देशवृत्तिसजातीयव्यापको विपक्षैकदेशवृत्तिश्च सामान्यविशेषवद-स्मदादिवाह्यकरणप्रत्यक्षे वाङ्मनसे अनित्यत्वात् साध्यैकदेशवृत्ति-सजातीयव्यापको विपक्षावृत्तिः अनित्ये वाङ्मनसे उत्पत्तिधर्मक-त्वात् साध्यैकदेशवृत्तिसजातीयावृत्तिः विपक्षव्यापकः अनित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात् साध्यैकदेशवृत्तिसजातीयावृत्तिः वि-पक्षैकदेशवृत्तिः सामान्यविशेषवदस्मदादिवाह्यकरणप्रत्यक्षे वाङ्मनसे नित्यत्वात् साध्यैकदेशवृत्तिसजातीयविपक्षावृत्तिः अनित्यः शब्दो विभागजविभागासमवायिकारणत्वात् साध्यतज्जातीयैकदेशवृत्तिः विपक्षव्यापकः अनित्याः परमाणवोऽगन्धवत्त्वात् साध्यतज्जातीयवि-पक्षैकदेशवृत्तिः अनित्ये वाङ्मनसे अमूर्तत्वात् साध्यतज्जातीयैकदेश-वृत्तिर्विपक्षावृत्तिः अनित्ये वाङ्मनसे सामान्यतोऽस्मदादिवाह्यकरण-प्रत्यक्षत्वात् साध्यैकदेशवृत्तिः तज्जातीयव्यापकः अविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण अनित्ये रूपविज्ञाने अमूर्तत्वात् वेदनादिवत् साध्यतज्जातीयैकदेशवृत्तिरविद्यमानसजातिः अनित्ये चक्षुर्विज्ञाने

अमूर्त्तत्वात् रूपादिवदिति साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिरविद्यमानविपक्षः अनित्ये शब्दमनसी श्रावणत्वात् साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षव्यापकः अनित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात् साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिश्च नित्ये चक्षुर्विज्ञाने मूर्त्तत्वात् साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः नेदं निरात्मकं शरीरमनिन्द्रियाधिष्ठानत्वप्रसङ्गात् साध्यैकदेशवृत्तिरविद्यमानसपक्षविपक्षः सर्वमनित्यं मूर्त्तत्वादिति एते च साध्यैकदेशवृत्तयः षोडश यथोक्ताः सर्वे हेत्वाभासाः ॥

अथ साध्यावृत्तयः। साध्यावृत्तिस्तज्जातीयविपक्षव्यापकः अनित्या पृथिवी गन्धवत्त्वात् साध्यावृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिः अनित्यः शब्दोऽश्रावणत्वात् साध्यावृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः अर्थः शब्दः अश्रोत्रग्राह्यसामान्यवत्त्वात् साध्यजातीयावृत्तिर्विपक्षव्यापकः अर्थः शब्दः असामान्यवत्त्वात् साध्यतज्जातीयावृत्तिर्विपक्षावृत्तिश्च कारणवान् शब्दोऽर्थत्वात् साध्यतज्जातीयविपक्षावृत्तिः नित्यः शब्दोऽसत्त्वात् साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्षव्यापकः अस्पर्शः शब्दो द्रव्यत्वात् साध्यावृत्तिस्तज्जातीयविपक्षैकदेशवृत्तिः कारणवान् शब्दो मूर्त्तत्वात् साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः स्वाश्रयवान् शब्दश्चाक्षुषत्वात् औलूक्यपक्षे साध्यावृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण अनित्यः शब्दोऽश्रावणत्वात् साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः अनित्यः शब्दो मूर्त्तत्वात् साध्यतज्जातीयावृत्तिरविद्यमानविपक्षः अनित्यः शब्दोऽसत्त्वात् साध्यावृत्तिरविद्यमानसजातिर्विपक्ष-

व्यापकः नित्यः शब्दोऽश्रावणत्वात् साध्याद्वृत्तिरविद्यमानसजाति-र्विपक्षैकदेशवृत्तिः नित्यः शब्दोऽसत्त्वात् साध्याद्वृत्तिरविद्यमान-समानविपक्षः अनित्यं सर्वमसत्त्वात् न एते षोडशसाध्याद्वृत्तयो हेत्वाभासाः विशेषणविशेष्यासिद्धभेदाद्वृत्तयः षड्भिर्भवन्तीत्युक्तम्। तत्कथं व्यापकाव्यापकविशेषणयोगात् य एव साध्यव्यापकाः षोडश तथैव च पक्षैकदेशवृत्तयः ते विशेषणविशेष्यासिद्धभेदेन चतुः-षष्टिर्भवन्तीति। तत्र व्यापकानां तावदुदाहरणानि। अनित्यः शब्दोऽनभिधेयत्वे सति प्रमेयत्वात् विशेषणासिद्धः प्रमेयत्वे सत्यभि-धेयत्वादिति विशेष्यासिद्धः। एवं सर्वेषु साध्यव्यापकेषु विशेषण-विशेष्यभेदो द्रष्टव्यः तान्येव षोदाहरणानि साध्यैकदेशवृत्तीनामु-दाहरणम्। पृथिव्यप्तेजोवाय्वाकाशान्यनित्यानि अनभिधेयत्वे सति अगन्धवत्त्वात् विशेषणासिद्धेः अगन्धवत्त्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धेः। एवं सर्वेषु साध्यैकदेशवृत्तिषु। एवमसमर्थविशेषणास-मर्थविशेष्याश्चतुःषष्टिरेव द्रष्टव्याः। यथा अनित्यः शब्दः कृतकत्वे सति प्रमेयत्वात् प्रमेयत्वे सति कृतकत्वादिति। एवं विशेषेषूदा-हरणेषु। एवं सन्दिग्धविशेषणविशेष्यभेदा अपि द्रष्टव्याः। यथा मयूरशब्दोऽयं षड्जादिमत्त्वे सति अवर्णात्मकत्वात् अवर्णात्मकत्वे सति षड्जादिमत्त्वात् न एते उभयपक्षसम्प्रतिपन्नाविद्यमानसाध्य-धर्मा उदाहृता इति। एवमन्यतरासिद्धा व्यापकाव्यापकभेदेन द्वात्रिंशकं[1] शतम्। ते च पुनर्व्यधिकरणविशेषणविशेष्यसन्दिग्धा-समर्थविशेषणविशेष्यभेदेन द्वानवतंशतम्। यथाग्निमान् देशो धूम-

(१) द्वाभ्यामूना विंशदिति वाच्यातं तात्पर्यटीकायां वाचस्पतिमिश्रैः।

यस्मात् अस्ति आत्मा इच्छादिगुणत्वात् असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम् अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वात्। अव्यापकासमर्थविशेष्याणामुदाहरणम् अनित्यः शब्दः प्रमेयभेदभेदित्वे(१) सति उपलभ्यमानत्वात्। व्यधिकरणविशेष्याणामुदाहरणम् अस्ति प्रधानं भेदानामन्वयदर्शनात्। व्यधिकरणविशेषणानामुदाहरणम् रूपादिशब्दाश्चन्दनशब्दादत्यन्तभिन्नार्थाः समुदायसमुदाय्यसम्भवे सति तेन व्यपदेशात्। एवमेव व्यधिकरणस्य विशेष्यस्योदाहरणम् विपर्ययेण अन्यथा विरुद्धोदाहरणम्(२) अन्येषां अभ्यासानित्यः शब्दः सन्दिग्धासिद्धविशेषणानामुदाहरणम् यथा सन्दिह्यमानधूमादिभावोऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वात् विपर्ययेण सन्दिग्धविशेष्या वक्तव्याः। एवं सन्दिग्धासिद्धाप्रसिद्धा उभयान्यतरसिद्धा व्यापकाव्यापकभेदेन चतुःषष्टिर्भवन्तीति। ते च पुनः पूर्ववद्भेदेन शतत्रयं चतुरशीतम्। एवमन्यथासिद्धभेदो द्रष्टव्यः। एवं विरुद्धविशेषणविरुद्धविशेष्याश्च सर्व एव द्रष्टव्या इति। एषां तूदाहरणानि हेत्वाभासवार्त्तिके द्रष्टव्यानि स्वयं चाप्यूह्यानि। त एते ऽहेतवो(३) हेत्वाभासास्त्वासङ्कीर्णविशेषणविशेष्यभेदेन द्वे सहस्रे द्वात्रिंशके(४) असिद्धादिसमुच्चयेनानन्तो भेद इति। साध्याहत्तयस्तसत्त्वाच्च विशेषणयोगिन इत्यतो नाभिधीयन्ते। एते विद्यमानसाध्य-

(१) प्रत्यक्भेदभेदित्वेनेति तात्पर्यटीकायां वाचस्पतिमिश्राः।
(२) अन्यथासिद्धोदाहरणमिति तात्पर्यटीकायाम्।
(३) तत्र चैव हेत्वभावो—पा० १ पु०। हेत्वाभावो—इति क्वचित्।
(४) द्वात्रिंशे द्वे सहस्रे भवत इति तात्पर्यटीकायाम्।

व्यापकाव्यापकधर्माः। प्रपञ्च उक्तः। तत्र मुख्यासिद्धभेदाः षोडश तयेते पञ्चावृत्तयः। अनैकान्तिकासङ्कीर्णा मुख्यतः षडेव साध्यव्यापकवर्गे विरुद्धाश्चत्वार एव तस्मिन् अन्तिमस्तु पञ्चमाचधर्मत्वात् अनुपसंहार्यैव शेषा हेत्वाभासाः तेऽसिद्धानैकान्तिका विरुद्धाव्यापकप्रसिद्धाव्यापकभेदेन सङ्कीर्णा उदाहरणेषु स्वयमूह्या इति। केचित्तु विरुद्धाव्यभिचारिणमनैकान्तिकं वर्णयन्ति। तन्नासत्त्वात्। न्यायमञ्जर्यामुक्तम्। उपेत्य तस्य पञ्चविंशतिधा भेदः पञ्चानां हेतूनां सरूपासरूपप्रतिसन्धानात् पञ्चपञ्चका भवन्तीति। तेषां तु सर्वेषां नोदाहरणानि सन्तीति नोदाह्रियन्ते। त एते हेत्वाभासाः संक्षेपेणैतावता भेदेन भेदवन्तस्तेषां सग्रहार्थं हेत्वाभासानां विभागोद्देशार्थं सूत्रम्। लक्षणात एव पञ्चत्वं गम्यत इति चेत् यद्येतानि पञ्चहेत्वाभासानां लक्षणसूत्राणि तैरेव पञ्चत्वं गम्यत इति नियमार्थं सूत्रमनर्थकम्। नानर्थकम् लक्षणस्येतरेतरव्यवच्छेदकत्वात् व्यवच्छेदकं लक्षणं न पुनर्नियमार्थम् न हि नियमो लक्षणेन गम्यत इति॥

## अनैकान्तिकः सव्यभिचारः॥ ४६॥

तेषामनैकान्तिकः सव्यभिचारः। एतस्मिन्नन्ते नियत ऐकान्तिकः। कः पुनरयं व्यभिचारः साध्यतज्जातीयान्यवृत्तित्वम्। यत् खलु साध्यतज्जातीयवृत्तित्वे सति अन्यत्र वर्तते तद्व्यभिचारि तद्वृत्तित्वं व्यभिचारः सर्वोऽयं पदार्थभेदोऽन्तद्वयेवतिष्ठते अन्यच्च प्रमेयात् नित्यश्चानित्यः व्यापकश्चाव्यापकश्च इत्येवमादि। तत्र यो हेतुरुपात्त उभावन्तावाश्रित्य प्रवर्तते सोऽनैकान्तिकः अनैकान्तिक

इति । किं पुनरयं पर्युदास उत प्रसज्यप्रतिषेध इति किं चातः यदि पर्युदासः सर्वानैकान्तिकता ऐकान्तिकादन्योऽनैकान्तिक इति ब्रुवतः सर्वानैकान्तिकः प्राप्तः । एवं चैको हेत्वाभास इति प्राप्तम् । अथ प्रसज्यप्रतिषेधः तथाप्यैकान्तिकाभावोऽनैकान्तिक इति प्राप्तम् । तस्य व्यभिचारोऽर्थो नास्तीति अयुक्तोऽनैकान्तिको हेत्वाभासः नायं पर्युदासपक्षः किन्तु प्रसज्यप्रतिषेधः प्रसज्यप्रतिषेधे ऽभाव इति चेत् नाभावो धर्मविशेषकत्वात् धर्मोऽयं विशिष्यते य एते सन्नियतो धर्म इति न भवति न पुनरभावः अभावे विशेषणविशेष्यासम्भवाभा-भाव एकान्तः अन्नियतो नानैकान्तिकः सन्नियतः कथम् अब्राह्मण-वदिति । यथा अब्राह्मणशब्दः प्रसज्यप्रतिषेधविषयत्वेन प्रवर्तमानो वस्त्वन्तरे तत्प्रतिषेधतीति न पुनरभावं प्रतिपादयति तथेहापीत्य-दोषः । उदाहरणं नित्यः शब्दः अस्पर्शवत्त्वात् शब्दस्यास्पर्शत्वमिति षष्ठ्या भेदः प्रदर्श्यते किं पुनस्तत् स्पर्शानाश्रयस्य स्वात्मसत्तानुभवो ऽस्पर्शत्वम् स्पर्शानाधारस्य सत्तासम्बन्धो वा उभयं च शब्दव्यति-रिक्तमित्यर्थवती षष्ठी । कुतः पुनरेतत् तद्भावे भावात् तदभावे-ऽभावादिति यत् खलु स्पर्शवत् सत्तामनुभवति न तथास्पर्शशब्दः प्रसज्यत इति यद्यासत् तथापि न प्रसज्यते यदस्पर्शं सत्तानुभावि तच्च प्रसज्यत इति । वाक्यार्थानुज्ञानाच्च पदार्थाभ्यनुज्ञा स्पर्शाना-धारस्य वस्तुनः सत्तासम्बन्ध इति यो वाक्यार्थः स एवास्पर्शवत्त्व-शब्दस्यार्थः । अतिदेशानुपपत्तिरयुक्तत्वादिति चेत् अनैकान्तिकः सव्यभिचार इति न कश्चिदनैकान्तिक उक्तः इहानैकान्तिकवच-नात् सव्यभिचारो गम्यते अतो न युक्तमनैकान्तिकः सव्यभिचार

इति नेदमयुक्तम् लोकतस्तदधिगतेः। यत् पुनर्लोकतो न गम्यते तत्र शास्त्रमर्थवत् यत् पुनर्लोकत एव गम्यते तत्रोपदेशोऽनर्थकः लोकतश्चैतद्गम्यते उभयान्तस्थनियतोऽनैकान्तिक इति। यदि च यल्लोकतो गम्यते तदयुक्तमिति मन्यसे दुःखादीन्यपि देशयितव्यानि किमिदं दुःखमिति तस्मात् परिपेलवमेतदिति अव्यापकत्वादलक्षणमेतदिति अथापीदं स्यादनैकान्तिकलक्षणेन न सर्वोऽनैकान्तिको गम्यते यथा असाधारणेनेति नानेनैव संग्रहात् कथमिति व्यावृत्तिद्वारेणाभिधीयमानोऽयमुभयान्तव्यावृत्तेरनैकान्तिक इति। अपरे पुनः प्रकरणसममनैकान्तिक एवान्तर्भावयन्ति कथमिति अनित्य आत्मा शरीरादन्यत्वादिति शरीरादप्यन्यन्नित्यमनित्यं च दृष्टमतोऽनैकान्तिक इति। तैस्तु न लक्षणव्यभिचारोऽवगतो नोदाहरणव्यभिचार इति अनैकान्तिकः सव्यभिचार इत्येतल्लक्षणम् व्यभिचारिणः यदि चानेन प्रकरणसमसंग्रहो भवति प्राप्तस्तर्हि लक्षणस्य व्यभिचारः न पुनरुदाहरणव्यभिचारोऽनैकान्तिकलक्षणव्यभिचार इति न लक्षणस्य तूभयं दोषः लक्ष्याव्याप्तिरलक्ष्यव्याप्तिश्चेति वक्ष्यमाणकं प्रकरणसमस्य लक्षणमीक्षितव्यम्॥

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ४७ ॥

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति। कोऽस्य सूत्रस्यार्थः। अभ्युपगतार्थविरोधी विरुद्धः। एवं च सर्वानुक्तविरुद्धसंग्रहः। यावान् कश्चन विरुद्धभेदः सर्वोऽसावनेन संगृहीत इति तस्मादभ्युपगतं बाधते अभ्युपगतेन बाध्यते। नन्वेवमेको हेत्वाभासो विरुद्धः

प्राप्नोति सत्यमेक एव हेत्वाभासो विरुद्धः तस्य तु सामान्येन विरुद्धत्वेन संगृहीतस्य पञ्चधापदेशो यथा प्रमेयमित्यनेन षोडश-पदार्था इति। पृथगभिधानं तर्हि विरुद्धस्य न कर्तव्यम् सामान्यतो-ऽधिगतस्य विशेषज्ञापनार्थं यथा प्रमेयस्यैव तत्रानैकान्तिकादि-हेत्वाभासो द्विरूपोऽनैकान्तिकादिर्विरुद्धः एतस्मिंस्तु विरुद्धतैवेत्य-साधारणतया कपोतपादिन्यायेन निष्कृष्याभिधानम्। तस्मादनै-कान्तिकादिषु निमित्तसमावेशात् सञ्ज्ञाद्वयसमावेशः विवक्षित-तज्जातीयान्यवृत्तित्वेनानैकान्तिकत्वम् हेतुविषयस्वरूपबाधारूपेण तु विरुद्धः। एवं सर्वत्रोदाहरणम् तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्व-प्रतिषेधात् अपेतमप्यस्ति विनाशप्रतिषेधात् विनाशप्रतिषेधादित्य-नेन न नित्यमभ्यनुज्ञातं नित्यत्वप्रतिषेधादित्यनेन प्रतिषिद्धम्। एते ते वाक्ये परस्परार्थबाधिते तयोश्च परस्परार्थबाधाविरोधः प्रतिज्ञा-हेत्वोर्वा विरोधः यो वा प्रतिज्ञाहेत्वोर्विरोधः स विरुद्धो हेत्वा-भासः। ननु प्रतिज्ञाविरोधः पृथगुपदिष्टो निग्रहस्थाने पृथक् च हेत्वाभासः तस्माच्च प्रतिज्ञाहेत्वोर्विरोधो वक्तव्य इति। नैष दोषः उभयाश्रितत्वाद्विरोधस्य। विवक्षातोऽन्यतरनिर्देशः प्रतिज्ञाहेत्वो-र्विरोध इति प्रतिज्ञाहेतू आश्रित्य उभयाश्रितो भवति तत्र यदि प्रतिज्ञया विरोधो विवक्षितस्तदा प्रतिज्ञाविरोध इत्युच्यते यदि प्रतिज्ञया हेतुविरोधो हेतोर्वा प्रतिज्ञाविरोधकत्वं तदा विरुद्धो हेतुरित्यतः प्रतिज्ञाविरोधो हेतुविरोधो वेत्यदोषः। हेतुविरो-धोदाहरणम् नित्यः शब्द उत्पत्तिधर्मकत्वात् प्रतिज्ञाविरोधस्यो-दाहरणम् नास्त्यात्मेति प्रतिज्ञाहेतुविरोधोदाहरणम् गुणव्यतिरिक्तं

द्रव्यम् अर्थान्तरस्यानुपलब्धेः हेतुविरोधोदाहरणम् नास्त्येको भावः समूहे भावशब्दप्रयोगादिति समूह इति ब्रुवाणेनैकान्तिकोऽभ्युपगतो भवति एक समुच्चयो हि समूह इति ॥

## यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ४८ ॥

यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। कस्मात् प्रकरणचिन्ता तत्त्वानुपलब्धेः यस्मादुपलब्धतत्त्वे निवर्तते चिन्ता तस्मात् सामान्येनाधिगतस्य या विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयति। उदाहरणम् नित्यः शब्दोऽनित्यधर्मानुपलब्धेः अत एव प्रकरणमित्यतो न हेतुः। नन्वयं साध्याविशिष्ट एव यथा शब्दस्य नित्यत्वं साध्यं तथाऽनित्यधर्मानुपलब्धिरपीति नाविशिष्टः तस्यैव प्रकरणप्रवृत्तिहेतोर्धर्मस्य हेतुत्वेनोपादानात् यत्र साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः। यत्र पुनः प्रकरणप्रवृत्तिहेतुरेव प्रकरणसमः ये तु संशयहेतुत्वात् प्रकरणसमानैकान्तिकं वर्णयन्ति तेषां प्रत्यक्षानैकान्तिकप्रकरणसमानामभेदः प्राप्नोति प्रत्यक्षमपि संशयकारणमिति समूहः संशयस्य कारणमित्यतो न प्रत्यक्षप्रसङ्गः। सामान्यदर्शनं विशेषाव्यवस्था विशेषस्मृतिश्च समूह इति संशयस्य कारणम् नैकं प्रत्यक्षमतो न प्रत्यक्षप्रसङ्गः समूहः कारणमित्यभिधानादप्रतिषेधः समूहः कारणमित्येवं ब्रुवता न प्रत्यक्षस्य संशयकारणत्वं प्रतिषिद्धं भवति तस्मात् प्रसङ्गतस्तदवस्थ एवेति उभयधर्मानुपलब्धावन्यतरधर्मोपादानं प्रकरणसमार्थः। यत्र

चानूभयविशेषानुपलब्धिरन्यतरविशेषस्योपादानम् यत्प्रकरणाप-
नोदाय स प्रकरणसमो हेत्वाभासः उभयविशेषानुपलब्धेरभिधा-
नाशक्यत्वात् न ह्युभयविशेषोऽनुपलब्धः शक्यो दर्शयितुम् शरीरा-
दन्यत्वं तु न सूत्रार्थः न ह्ययं शरीरादन्यत्वमुपलभमानोऽपि यदा
तत्त्वमुपलभते तदा प्रवर्त्तेत इति तदा तत्त्वं नोपलच्यते शरीरा-
दन्यत्वमुपलभमानोऽपि तदा प्रवर्त्तेत इति। शरीरादन्यत्वं च नैका-
न्तिकं मतश्च न सूत्रार्थः॥

## साध्याविशिष्टः साध्यत्वात् साध्यसमः॥ ४९॥

साध्याविशिष्टः साध्यत्वात् साध्यसमः। साध्येनाविशिष्टो यः साधनधर्मः साध्यवत् प्रज्ञापयितव्यः स साध्यसमो हेत्वाभासः। तस्योदाहरणम् द्रव्यं छाया गतिमत्त्वादिति। यथैव द्रव्यं छायायाः साध्यं तथा गतिमत्त्वमपीति। गतिमत्त्वं देशान्तरदर्शनादिति चेत् तथापीदं स्यात् गतिमच्छाया देशान्तरे दर्शनादिति। यत् खलु देशान्तरेषूपलभ्यते तद्गतिमत् यथा कुम्भः तथा छाया तस्माद् गतिमती नान्यथासिद्धत्वात्। एवमप्यान्यथासिद्धो हेतुः सति द्रव्य-भावे छायाया देशान्तरे दर्शनं समर्थं स्यात् द्रव्यभावस्त्वसिद्धः तस्मादान्यथासिद्धो हेतुः उपेत्य देशान्तरे दर्शनं तस्यान्यथासिद्धेर-सिद्धेः यत्तु देशान्तरे दर्शनं छायायास्तदन्यथा भवति अन्यथाभव-नार्थं बाधति(१) कथमन्यथा आवरणसन्तानादसन्निधिसन्तानतेजसि यावके द्रव्येऽपसर्पति तेजसोऽसन्निधिविशिष्टं द्रव्यं यदुपलभ्यते तत्तु

(१) बाधते—इति पाठः।

प्रमाणतः कथं स्वयमनुपलब्धो धर्मः परप्रतिपादनायोपादीयत इति ॥

यदिदं भावान् बुद्धीराश्रित्य विषयाः सन्तीति मन्यसे मिथ्याबुद्धय एताः यदि हि तत्त्वबुद्धयः स्युः बुद्ध्या विवेचने क्रियमाणे बुद्धिविषयाणां याथार्थ्य[1]मुपलभ्येत ॥

बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे[2] पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥

बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिः तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः। य एते बुद्धिविषया गवादयो घटादयश्च नैते तत्त्वतः सन्ति कस्मात् बुद्ध्या विविच्यमानानां भेदग्रो ग्रहणात्। यथायं तन्तुरयं तन्तुरिति बुद्ध्या तन्तुषु विविच्यमानेषु न पटः कश्चिदस्ति यः पटबुद्धेर्विषयः स्यादेव[3]मंशुषु बुद्ध्या विविच्यमानेषु एवं तदवयवेषु तावद् यावत् परमाणुः परमाणवोऽपि भागशो विविच्यमानास्तावत् यावत् प्रलय इति। तदेवं सर्वस्यासत्त्वे गवादिबुद्धयो घटादिबुद्धयश्च मिथ्याबुद्धय इति ॥

व्याहतत्वादहेतुः ॥ २७ ॥

व्याहतत्वादहेतुः। बुद्ध्या विवेचनात् तु भावानां सर्वभावानुपपत्तिरित्ययुक्तम् कस्माद् व्याघातात् को व्याघातः सद्भावासद्भावः

(१) यथार्थता—पा० ४ पु० ।

(२) न याथात्म्योपलब्धिस्तन्त्वपकर्षे—इति क्वचित्। न याथार्थ्यस्योपलब्धिस्तन्त्वपकर्षे—पा० ४ पु० । (३) भवेदेव—पा० ४ पु० ।

यदि बुद्ध्या विवेचनं भावानां न सर्वभावानुपपत्तिः । अथ सर्वभावानुपपत्तिर्न बुद्ध्या विवेचनं सर्वभावानामिति सर्वभावानामनुपपत्तिरिति ब्रुवाणः प्रमाणं पर्यनुयोज्यः यदि प्रमाणं ब्रवीति व्याहतं भवति अथ न ब्रवीति अर्थोऽस्य न सिद्ध्यति प्रमाणाभावात् । अथाप्रामाणिकी सिद्धिः सर्वभावोत्पत्तिः कस्मान्न सिद्ध्यति यश्च सर्वभावानामभावो भावेष्वितरेतरापेक्षसिद्धेरित्येतस्मिन् वादे दोष उक्तः स इहापि द्रष्टव्य इति । यत् पुनरेतत् यदि व्यतिरिक्तं पटादिद्रव्यं स्यात् तन्तुषु बुद्ध्या विविच्यमानेषु पृथगुपलभ्येतेति ॥

## तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

तदाश्रयत्वादपृथग्ग्रहणम् । कारणद्रव्याश्रितं कार्यं तस्मिन् न पृथगुपलभ्यत इति विपर्यये यदि पृथग्ग्रहणात् यत्र कार्यकारणभाव आश्रयाश्रितभावस्य नास्ति तत्र पृथग्ग्रहणमिति ॥

## प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

प्रमाणतश्चार्थप्रतिपत्तेः । यदस्ति तथा च यन्नास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या सिद्ध्यतीति । शेषं भाष्ये ॥

## प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

## स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः । यथा स्वप्ने विषया न सन्ति अथ च विषयाभिमानः एवं न प्रमाणानि न प्रमेयाणि सन्ति अथ च प्रमाणप्रमेयाभिमानः ।

मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥
हेत्वभावादसिद्धिः ॥ ३३ ॥
स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

मायागन्धर्वनगरमृगतृष्णिकावदेति। न प्रमाणाभावात् स्वप्नान्त-वदविद्यमानेषु विषयेषु अभिमान इत्यत्र न हेतुरुच्यते इति स्वप्नान्ते चासन्तो विषया इति को हेतुरिति। ख्यातिरिति चेत् अयं जाग्रदवस्थोपलभ्यानां विषयाणां चित्तव्यतिरेकिणामसत्त्वे हेतुः ख्यातिः स्वप्नवदिति न दृष्टान्तस्य साध्यसमत्वात्। य एते स्वप्नावस्थायां विषयाः ख्यान्ति न ते चित्तव्यतिरिक्ता इति अत्र को हेतुः। प्रतिबुद्धेनानुपलम्भान्न सन्तीति अथ मन्यसे यस्मात् प्रतिबुद्धेन नोपलभ्यन्ते तस्मान्न सन्तीति न विशेषणोपादानात्। ये प्रतिबुद्धेनोपलभ्यन्ते ते सन्तीति प्राप्तं व्यर्थं वा विशेषणं प्रति-बुद्धेनानुपलम्भादिति। यदि चोपलभ्यमानं जाग्रदवस्थायां विषय-मसन्तं मन्यसे[१] अथ चित्तमस्तीत्यत्र को हेतुरिति विपर्यये च सामर्थ्याभावाद्धेतुः जाग्रतोऽनुपलब्धिरिति। यद्युपलब्धिः सत्त्वसाधनं ततोऽनुपलब्धिरसत्त्वं साधयति विपर्यये हि सामर्थ्यं दृष्टमिति। न चित्तव्यतिरेकिणो विषया ग्राह्यत्वात् वेदनादिवदिति यथा वेद-नादिग्राह्यं न चित्तव्यतिरिक्तं तथा विषया अपि वेदना सुखदुःखे चित्तं ज्ञानमिति सुखदुःखाभ्यां चान्यं ज्ञानमित्यसिद्धो[२] दृष्टान्तः

(१) प्रतिपद्यसे—पा॰ ३ पु॰।
(२) सुखदुःखाभ्यां चान्यं वेदनादिग्राह्यं न चित्तव्यतिरिक्तज्ञानमित्यसिद्धो—पा॰ ३पु॰।

सुखदुःखे ग्राह्ये ग्रहणं ज्ञानमिति[1] ग्राह्यग्रहणभावादन्यत्वम् । अथाभिन्नं विज्ञानं वेदनायास्तथापि ग्राह्यं च गृहीतिश्च एकमिति न दृष्टान्तोऽस्ति। न हि कर्म च क्रिया च एकं भवतीति। अथैकत्वं प्रमाणवृत्तमनपेक्ष्य प्रतिपद्येथाः तथापि चत्वारः स्कन्धा इति शास्त्रव्याघातः। अथ चतुष्टं न प्रतिपद्यते दृष्टं विज्ञानमात्रमेवाभ्युपगम्यते सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्यः बाह्यस्याध्यात्मिकस्य च विज्ञानभेदहेतोरभावात्[2] । कथं विज्ञानभेद इति स्वप्नवद्विज्ञानभेदं यदि प्रतिपद्यते सोऽपि दृष्टानुभूतानां भावानां भावनावशेन विज्ञानभेदं प्रतिपादयितव्यः । अथ स्वप्नपक्षे भावानां भावनावशाद् विज्ञानभेदं प्रतिपद्येत सोऽपि भाव्यभावकयोर्भेदेन[3] प्रत्यवस्थेयः नाभिन्नं भाव्यं भावकं चेति ये चैते स्वप्नादिप्रत्ययाः पुरविमानोद्यानयानादिभेदानुविधायिनः ते मिथ्याप्रत्यया इति मिथ्याप्रत्ययानां च जाग्रदवस्थाप्रत्ययसामान्याद्भावः ममापि सर्व एव मिथ्याप्रत्यया भविष्यन्तीति ब्रुवाणः प्रधानमनुयोक्तव्यः न च निःप्रधानं विपर्ययप्रत्ययं पश्याम इति चित्तव्यतिरेकिणं विषयमप्रतिपद्यमानः साधनदूषणस्वभावं पर्यनुयोक्तव्यः । यदि बाह्यस्वभावकं व्याघातकम् अथ चित्तस्वभावकं न चित्तेन परः प्रतिपद्यते इत्यर्थो न[4] सिद्ध्यति । न चीतरस्वप्नमनाख्यातमितरो विजानातीति। अथ ग्राह्याकारं चित्तं

(१) विज्ञानमिति—पा० ४ पु० ।

(२) सोऽपि दृष्टविज्ञानहेतोरभावात्—पा० ४ पु० ।

(३) भाव्यभावकधर्मयोर्भेदेन—पा० ४ पु० ।

(४) इत्यर्थोऽस्य न—पा० ४ पु० ।

प्रतिपद्यते तेनापि शब्दाकारं चित्तमित्याकारार्थो वक्तव्यः । आकारो हि नाम प्रधानवस्तुसामान्यादतस्मिंस्तदिति प्रत्ययः । न च भवत्यसौ शब्दो विद्यत इति शब्दाकारं चित्तमिति निरभिधेयं वाक्यम् चित्तव्यतिरिक्तं विषयमप्रतिपद्यमानो जाग्रत्स्वप्नावस्थायां भेदं पर्यनुयोज्यः जाग्रदवस्थायां विषया न सन्ति स्वप्नावस्थायामपीति इयं स्वप्नावस्था इयं जाग्रदवस्थेति कुत एतत् धर्माधर्मव्यवस्था न प्राप्नोति(१) यथा स्वप्नावस्थायामगम्यादिगमनादधर्मोत्पत्तिर्न भवत्येवं जाग्रदवस्थायामपि न स्यात् । अथ निद्रोपघातानुपघातौ भेदं जनयत इति प्रतिपद्येत तदपि तादृगेव निद्रोपघातस्येति सो वैकल्यहेतुरिति कथमवगम्यते । अथ विज्ञानस्य स्पष्टतामस्पष्टतां च भेदं प्रतिपद्येत विषयमन्तरेण ज्ञानस्य तुच्छताऽस्पष्टता वक्तव्या । असत्यर्थे(२) विज्ञानभेदो दृष्ट इति चेत् अथ मन्यसे यथा तुल्यकर्मविपाकोत्पन्नाः प्रेताः पूयपूर्णां नदीं पश्यन्ति न तत्र नद्यस्ति न पूयं न ह्येकं वस्त्वनेकाकारं भवितुमर्हति दृष्टश्च विज्ञानभेदः केचित् तामेव जलपूर्णां पश्यन्ति केचित् रुधिरपूर्णामित्यतोऽवसीयते यथाऽध्यासे निमित्तापेक्षमसति बाह्ये निमित्ते विज्ञानमेव तथोत्पद्यते इति । न व्याघातात् असति बाह्ये विज्ञानमेव तथेति भवान् प्रष्टव्यो जायते कथं तथेति । यदि रुधिराकारं विज्ञानं रुधिरं तर्हि वक्तव्यं किं रुधिरमिति एवं जलाकारं नद्याकारं च वक्तव्यं पूयपूर्णां पश्यन्तीति च वाक्यस्य पदानि प्रत्येकं विचार्य-

---

(१) अवस्थानं न प्राप्नोति—पा० ४ पु० । (२) असत्यप्यर्थे—पा० ४ पु० ।

माणानि रूपादिस्कन्धा भावैर्निर्विषयाणि भवन्ति देशादिनियमश्च न प्राप्नोति एकस्मिन् देशे नदीं पूयपूर्णां पश्यन्ति न देशान्तरेषु असत्यर्थे नियमहेतुर्वक्तव्यः यस्य पुनर्विद्यमानं केनचिदाकारेण व्यवस्थितं तस्य शेषो मिथ्याप्रत्यय इति युक्तम् । मिथ्याप्रत्ययाश्च भवन्तो न प्रधानं(१) बाधन्त इति पूयादिप्रत्ययानां प्रधानं वक्तव्यमिति यथा पूयादिप्रत्ययानामेवं मायागन्धर्वनगरमृगतृष्णास्वप्नज्ञानानामिति कर्मणो वासनान्यच फलमन्यच कल्प्यत इति । अयार्थो यचैव क्रिया कर्म तचैव क्रिया फलेन भवितव्यम् यस्य चित्तव्यतिरेकिणो विषयास्तस्यान्यच कर्मान्यच कर्मफलमिति व्यधिकरणे कर्मफले भवत इति । तन्नानभ्युपगमात् न मया कर्मफले व्यधिकरणे अभ्युपगम्येते आत्मनि कर्म तचैव फलमित्यदोषः । मदीयाच्चित्तात् अर्थान्तरं विषयाः सामान्यं विशेषवत्त्वात् सन्तानान्तरचित्तवत् प्रमाणगम्यत्वात् कार्यत्वादनित्यत्वात् धर्मपूर्वकत्वाच्चेति ।

एवं च सति ॥

## मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे । स्थाणौ पुरुषाध्यवसायो मिथ्योपलब्धिः तत्त्वज्ञानेन च

(१) प्रधानप्रत्ययं बाधन्त- पा० ४ पु० ।

मिथ्याध्यवसायः स निवर्तते नार्थः स्थाणुपुरुषसामान्यलक्षणः न ह्यसौ स्थाणुर्न भवतीति यथा स्वप्नोपलब्धानां ये ऽध्यवसायाः ते जाग्रद्वस्थोपलब्ध्या निवर्त्यन्ते नार्था विषयसामान्यलक्षण इति । शेषं भाष्ये ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भादप्रतिषेधः । मिथ्याबुद्धेर्निमित्तमस्ति किं पुनस्तत्सामान्यदर्शनं विशेषादर्शनम् अविद्यमानविशेषाध्यारोप इति । मिथ्याबुद्धिं प्रतिपद्यमानेन तस्यानिमित्तं वक्तव्यं निमित्तं च प्रतिपद्यमानेनार्थोऽभ्युपेय इति ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः तत्त्वं स्थाणुरिति प्रधानं पुरुष इति तत्त्वप्रधानयोरलोपे मिथ्याबुद्धिर्भवतीति । शेषं भाष्ये । दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम् ।

अथ तत्त्वज्ञानं कथमुत्पद्यत इति ॥

समाधिविशेषाभ्यासात् ॥ ३८ ॥

समाधिविशेषाभ्यासात् । शेषं भाष्ये । व्यापकत्वादन्तःकरणस्य प्रत्याहारो न युक्त इति चेत् अथ मन्यसे व्यापकमन्तःकरणं तत्कथं प्रत्याह्रियत इति नोक्तोत्तरत्वात् । यथा न व्यापकमन्तःकरणं तथोक्तमधस्तात्(१) । स्थाङ्गतीचणानुपपत्तिरिति चेत् अथ

(१) अणुत्वात्—पृ० ४ पु० ।

मन्यसे यद्यप्यन्तःकरणमणु तथापि शाखाग्रगतिवैलक्षण्यं[1] न प्राप्नोति युगपद्धस्ते चक्षुषि वा सन्निधानात् शरीरात्ममनःसंयोगयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः शाखाशरीरसम्बन्धश्चात्मनः सम्बन्धश्च[2] युगपद् भवति तथात्ममनःशरीरसम्बन्धात् शाखाग्रगतिरात्ममनः-सम्बन्धाच्चक्षुषः प्रेरणम् तथा शाखाग्रगतिः प्रयत्नाद्भवतीति दर्शनं चक्षुरश्मेरर्थस्य च सन्निधानादिति । न चात्मनः प्रदेशाः सन्तीत्य-चोद्यम् प्रदेशवति चात्मनि अन्येनात्मप्रदेशेन मनः सम्बध्यते अन्येन शरीरमिति शाखाग्रे गतीक्षणादिदोषः यस्य पुनर्निष्प्रदेश एवासौ तस्यैव दोषो न भवतीति शरीरसम्बन्धिनात्मना मनः सम्बन्ध इति ॥

## नार्थविशेषप्राबल्यात् ॥ ३९ ॥

नार्थविशेषप्राबल्यात् । नोपपद्यते समाधिविशेषाभ्यासः अबु-भुत्समानस्यापि बुद्ध्युत्पत्तेः यथा स्तनयित्नोः शब्दप्रभृतिषु इति ॥

## क्षुदादिभिः प्रवर्तनाच्च ॥ ४० ॥

क्षुदादिभिः प्रवर्तनाच्च[3] । क्षुत्पिपासाभ्यां चानिच्छतोऽपि[4] बुद्धय एव उत्पद्यन्ते इति न युक्तः समाधिविशेषः ॥

## पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतफलानुबन्धात् तदुत्पत्तिः । पूर्वकृतः पूर्वशरीराभ्यस्तः

---

(१) शाखाग्रवैरीक्षणं—पा० ४ पु० ।

(२) सम्बन्धश्चात्मनः सम्बन्ध—पा० ३ पु० । एवमग्रेऽपि ।

(३) क्षुधादिभिः प्रवर्तनाच्चेति क्वचित् ।   (४) चानिच्छतोऽपि—पा० ४ पु० ।

समाधिविशेषः तस्य फलं धर्मः तत्कृतः पुनः समाधिविशेष इति समाधिविशेषाच्च बाह्यविषयाभिभवः लौकिकस्यापि तावत्समाधिविशेषावस्थितस्य बाह्यविषयोपनिपाते बुद्धयो नोत्पद्यन्ते किं पुनर्योगिन इति। यदि बाह्यविषयोपनिपाते ऽर्थज्ञानानि प्रादुर्भवन्ति अपवर्गेऽप्येवं प्रसङ्गः मुक्तस्यापवर्गे बाह्यविषयविशेषोपनिपातो[१] विद्यत इति बुद्ध्युत्पादप्रसङ्गः॥

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः॥ ४२॥**

**अपवर्गे ऽप्येवंप्रसङ्गः॥ ४३॥**

**न निष्पन्नावश्यम्भावित्वात्॥ ४४॥**

न निष्पन्नावश्यम्भावित्वात्। सति शरीरे बाह्यविषयो ज्ञानोत्पत्तिकारणम् नान्यथेति सूत्रार्थः॥

**तदभावश्चापवर्गे॥ ४५॥**

तदभावश्चापवर्गे। तस्य शरीरादेरुपलब्धिकारणस्याभावोऽपवर्ग इति। तस्मात् सर्वदुःखमोक्षो[२]ऽपवर्ग इति। यस्मात् सर्वं दुःखबीजं दुःखं चापवर्गे विच्छिद्यते तस्मात् सर्वदुःखेन विमुक्तिरपवर्गः॥

**तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः॥ ४६॥**

(१) विषयोपनिपाते—पा० ४ पु०। (२) सुखदुःखमोक्षो—पा० ४ पु०।

तदर्थं यमनियमाभ्यामात्मसंस्कारः योगाच्च विध्युपायैः ।

तस्यापवर्गस्याधिगमाय यमनियमाभ्यासंस्कारः(१) ॥

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥**

अध्यात्मग्रहणाभ्यासः तद्विद्यैश्च सह संवादः ज्ञानग्रहणं शास्त्रग्रहणं तद्विद्याचार्यसमुपायं बुद्ध्यन्त इति तद्विद्या इत्यविभक्तार्थं वचनम् ॥

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥ ४८ ॥**

तं शिष्यगुरुसब्रह्मचारिविशिष्ट इत्येवमादि सूत्रम् एतत् तु निगदेनैव नीतार्थम् ॥

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥**

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे तमभ्युपेयादिति वर्त्तते ॥

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥**

तत्त्वाध्यवसायसंरक्षणार्थं(२) जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति । अनुत्पन्नतत्त्वज्ञानेनैतत्कर्त्तव्यमिति सूत्रार्थः । विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य ।

---

(१) नियमाभ्यामात्मसंस्कार—पा० ४ पु० ।

(२) प्रतिपक्षहीन—इत्यधिकम् ४ पु० ।

## ताभ्यां विगृह्य कथनम्[१] ॥ ५१ ॥

ताभ्यां जल्पवितण्डाभ्यां विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति विद्यापालनार्थं चैतत् न लाभपूजाख्यात्यर्थमिति[२] ॥

प्रवृत्तिर्दोषसम्बन्धः प्रेत्यभावः प्रपञ्चितः ।
फलं दुःखं विमुक्तिश्च चतुर्थे परिकीर्तिताः ॥

## इति-श्रीउद्द्योतकरे न्यायसूत्रवार्त्तिके चतुर्थाध्यायस्य द्वितीयमाह्निकम्[३] ॥

## चतुर्थोऽध्यायः समाप्तः ॥

---

(१) न्यायसूचीनिबन्धानुसारेणेदं सूत्रमेव । भाष्यमित्यन्ये ।

(२) ताभ्यां विगृह्य कथनमिति सूत्रम् । यस्तु कुदर्शनवत्ताचितमिथ्याज्ञानसवसम्म्य दुर्विदग्धतया सद्विद्यावैराग्याद्वा लाभपूजाख्यात्यर्थितया कुहेतुभिरीश्वराणां जनाधाराणां पुरतो वेदब्राह्मणपरलोकादिदूषणे प्रवृत्तं प्रति वादी समीचीनं दूषणमप्रतिभयाऽपश्यन् जल्पवितण्डे चवतार्य विगृह्य जल्पवितण्डाभ्यां तत्त्वकथनं करोति विद्यापरिपालनाय । माभूदीश्वराणां मतिविभ्रमेण तच्चरितानुवर्त्तिनीनां प्रजानां धर्मविप्लव इति इदमपि प्रयोजनं जल्पवितण्डयोः न तु लाभख्यात्यादि दृष्टम् । न हि परचित्तप्रवृत्तपरमकारुणिको मुनिर्दृष्टार्थं परपीडनोपायमुपदिशतीति तात्पर्यटीकायां वाचस्पतिमिश्राः ।

(३) इति श्रीमदुद्द्योतकराचार्यविरचितं न्यायसूत्रचतुर्थाध्यायवार्त्तिकं समाप्तम् —पा॰ ३ पु॰ ।

## पञ्चमोऽध्यायः ।



जातेः संक्षेपेणोक्ताया विस्तरो वक्तव्य इतीदमारभ्यते[१] ।
साधर्म्यादि सूत्रम् ॥

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥१॥**

तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिषेधासमर्थो हेतुः । जातेः प्रयोगप्रतिषेधादसदुत्तरत्वाच्चारम्भो न युक्तः छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनमिति प्रतिषिद्धा जातिः न च जातिः सदुत्तरमतश्च जातेः प्रयोगो न युक्तः । अनारम्भप्रयोजनस्योक्तत्वादुक्तं जातेरारम्भप्रयोजनं स्वयं च सुकरः प्रयोग इति । साधुसाधननिराकरणार्थं वा प्रयोगः । यदा तु वादी परस्य साधनं साध्विति मन्यते लाभपूजाख्यातिकामश्च भवति तदा जातिं प्रयुङ्क्ते कदाचि-

(१) अथ प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च तत्किमपरमवशिष्यते यदर्थं पञ्चमाध्याय आरभ्यत इत्यत आह । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति भाष्यम् । तस्यार्थमाह वार्त्तिककारः जातेः संक्षेपेणोक्ताया इत्यादि । इति तात्पर्यटीकायां वाचस्पतिमिश्राः ।

द्यं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्यते उत्तराप्रतिपत्त्या च निगृह्यते अनभिधाने च जातेरेकान्तजयः परस्येत्यैकान्तिकात् पराजयाद्वरमस्तु सन्देह[१] इति युक्तो जातेः प्रयोगः। असाधुसा-धननिराकरणार्थमित्यन्ये। एके तु जातेः प्रयोगं मन्यन्ते असाधु-साधननिराकरणार्थमेवं चाहुः असाधौ तु साधने च जातां प्रयोग सोनभिज्ञतया साधनदोषस्य तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेनेति। एतत्तु न युक्तम् प्रयोजनाभावात्। यदि तावदसाध्वेतत्साधनमिति प्रतिपद्यते य एवास्य दोषो बुद्धः स एव वक्तव्यो न जात्यभिधानेन[२] प्रयोजनमस्ति। अथ न बुध्यते किमिति जातिं प्रयुङ्क्ते न ह्यबुध्य-मानः शक्नोति प्रयोक्तुम्। अथाबुध्यमानोपि प्रयुङ्क्ते यत्किञ्चिद् ब्रूयात् नियमो न स्यात्। एतेनानैकान्तिके पञ्चानां प्रयोगः प्रत्युक्तः। य आहुरनैकान्तिके साधने परेण प्रयुक्ते पञ्च जातयः प्रयोक्तव्या इति तदप्यनेनैव प्रत्युक्तम्। कथमिति बुद्ध्वा तदेव वक्तव्यमबुद्ध्वा अज्ञान-मिति। एतेन युक्तायुक्तयोः पूर्वापरभावः प्रत्युक्तः। अयुक्ते साधने अयुक्तमुत्तरं युक्ते युक्तमिति। युक्तं च नाम यत् प्रतिज्ञादिदोषोद्भा-वनं नासौ जातिः उत्तरमेव तदिति जातिलक्षणापरिज्ञानादयुक्तमे-तदपीति। समीकरणार्थं प्रयोगः समः साधर्म्यमेव समं वैधर्म्यमेव[३] सममिति समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः। समीक्रियतां परपक्षो मावाकारि अयं तु समीकरणार्थं प्रवर्तते यथा लोके

(१) वरं तत्सन्देह—पा० १ पु०। (२) जात्यभिधाने—पा० १ पु०।
(३) समं वैधर्म्यमेव—इति नास्ति १ पु०।

कुटुम्बार्थं यतत इति । विशेषहेत्वभावो वा समार्थः न भवता विशेषहेतुः कश्चिदपदिश्यत इति । एतमर्थमुररीकृत्य प्रवर्तते यथाभूतं भवतः साधनं तथाभूतं ममापीति न सर्वापदेशव्याप्तिरव्यापकत्वात् । न हि सर्वापदेशे सर्वा जातयः प्रवर्तन्ते न हि वैधर्म्येण स्थापनायामुत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमाः प्रयोक्तुं शक्यन्त इति । न वादिप्रतिवादिनोस्तुल्यता समार्थः जातेरसदुत्तरत्वात् । नियमेनैव जातिवाद्यसद्वादी भवति वादिनस्तु सदसद्वादित्वे अनियम(१) इति ॥

## साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

प्रतिषेधाविति । साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं साधर्म्यसमः यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् । उत्पत्तिधर्मकं कुम्भाद्यनित्यं दृष्टम् । यद्यनित्यघटसाधर्म्यादनित्यः नित्येनाप्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यः प्राप्त इति । एतस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः नित्यसाधर्म्यमप्याकाशेनामूर्तत्वमस्तीति नित्यः(२) प्राप्तः । अथ मन्यसे सत्यस्मिन् साधर्म्ये न नित्यः न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति । सेयं जातिर्विशेषहेत्वभावं दर्शयति विशेषहेत्व-

(१) अनियमप्रसङ्गः—पा० १ पु० ।
(२) अमूर्तत्वसत्त्वतो नित्यः—पा० १ पु० ।

भावाचानैकान्तिकदेशनाभासा इति। एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः यथा तस्मिन्नेव हेतावाकाशवैधर्म्यादनित्य इत्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः अनित्येनापि घटेनास्य वैधर्म्यममूर्त्तत्वमतो नित्यः प्राप्तः। तस्मिन्नेव हेतौ घटसाधर्म्यादित्युक्ते यद्यनित्यघटसाधर्म्यादनित्यः वैधर्म्यमप्यस्यास्त्यमूर्त्तत्वमतो नित्यः प्राप्तः। अथ मन्यसे सत्येतस्मिन्[1] वैधर्म्ये न नित्यः[2] न तर्ह्ययमेकान्तोऽनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति। सेयं विशेषहेत्वभावः॥

अनयोरुत्तरम्।

## गोत्वाद्गोसिद्धिवत् तत्सिद्धिः॥ ३॥

गवाश्वसाधर्म्ये सत्त्वादौ समाने वैधर्म्ये चैकशफत्वादौ साधर्म्यात् सत्त्वाद्गौरश्वो न भवति। न वैधर्म्यादेकशफत्वादेरगौर्गौर्भवति। किं कारणम् एकस्यानन्वयादेकस्य चाव्यावृत्तेः। यदन्वयव्यतिरेकि-साधर्म्यं तस्माद्धर्मव्यवस्था गोत्वं च तथा तस्माद्गोत्वादेव गौः सिध्यति तथेहाप्यमूर्त्तत्वमुभयव्यतिरेकि उभयान्वयि च तस्मान्नित्यत्वमनित्यत्वं च[3] न शक्यं प्रतिपत्तुम्। अपि त्वन्वयव्यतिरेकसम्पन्नादुत्पत्तिधर्मकत्वा[4]दनित्य इति अतो यद्ब्रवीषि विशेषहेत्वभावादित्ययं विशेष इति॥

---

(१) सत्यप्यस्मिन्—पा० १ पु०। (२) प्राप्तः—इत्यधिकम् १ पु०।

(३) नित्यमनित्यं च—पा० १ पु०। (४) उत्पत्तिमत्त्वा—पा० १ पु०।

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥**

अविद्यमानधर्माध्यारोप उत्कर्षः विद्यमानधर्मापचयोऽपकर्षः वर्ण्यः साध्यः अवर्ण्यः असाध्यः विकल्पो विशेषः एतेषां धर्माणामुद्भावनार्थाः प्रयोगा उत्कर्षसमाद्या जातयः[१] साध्यसाधनधर्मयोस्तुल्यतया प्रत्यवस्थानं साध्यसमेत्युच्यते यथा तस्मिन्नेव हेतौ घटसाधर्म्यादिति उक्ते यदि यथा घटस्तथा शब्दस्तदा घटो रूपादिमान् शब्दोऽप्येवं प्रसक्त इत्युत्कर्षसमः। शब्दोऽरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्षसमः। घटोऽनित्य इत्यवर्ण्यः शब्दोऽप्येवं शब्दो वावर्ण्य इति घटोऽप्येवमिति वर्ण्यावर्ण्यसमौ। सत्येतस्मिन् उत्पत्तिधर्मकत्वे विभागजः शब्दो न विभागजो घटः विभागजाविभागजविकल्पे च[२] नित्यानित्यविकल्प इति विकल्पसमः। घटो वा अनित्य इत्यत्र को हेतुरयमपि साध्यवज्ज्ञापयितव्य इति साध्यवत् प्रत्यवस्थानात् साध्यसमः॥

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥**

न हेत्वर्थापरिज्ञानादिति सूत्रार्थः। न ब्रूमो यावन्तो घटधर्मास्ते सर्वे एव शब्दे सम्भवन्तीत्यपि तु यो यस्य साधको धर्म उपपद्यते स तत्साधनं तत्रोपसंह्रियते। तथा च शब्दे न शब्दे चोत्पत्तिधर्मकत्वं धर्म उपसंह्रियते। एवं यथोक्तमसम्बद्धम् यथा गौस्तथा गवय इत्युक्ते न गोधर्माः सर्वं एव गवये न गवयधर्माः सर्वं एव गवि

(१) उभयोः—पा० १ पु०। (२) विकल्पवत्—पा० १ पु०।

प्राप्नुवन्ति । अपि तु यदितरस्येतरेण समस्यते तावन्मात्रमेवोपसं-
ह्रियते । अशेषधर्मोपसंहारे तु यथा तथेत्येव न स्यात् स एवासाविति
स्यात् तथेदापीत्ययमदोषः । यत्पुनरेतद्विभागजाविभागजविकल्प-
वन्नित्यानित्यविकल्प इति । यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि
नैवं विभागजत्वम् । न हि किञ्चिद्विभागाज्जायमानं यथोक्तविशे-
षणं नित्यमनित्यं वा दृष्टमित्येतदप्यनुत्तरम् ॥

## साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

दृष्टान्तः साध्य इति ब्रुवता भवता न दृष्टान्तलक्षणं व्यज्ञायि ।
दृष्टान्तो हि नामाविहतयोर्दर्शनयोर्विषयः । तथा च साध्यत्वमनुप-
पन्नम् । अथ दर्शनं विहन्यते नासौ दृष्टान्तो लक्षणाभावादिति ।
यच्चोक्तं जातीनां[1] पौनरुक्त्यं प्रसज्यत इति । न पौनरुक्त्यमर्थ-
भेदात् । यथा चोत्कर्षसमादीनां भिन्नोऽर्थस्तथोक्तम् । प्रयोगभेदद-
र्शनाच्च प्रयोगस्य भिन्न उत्कर्षसमादीनामिति । आनन्त्यमिति चेत्
अथ मन्यसे यदि प्रयोगभेदाद्भेदो न चतुर्विंशतिर्जातय इति
प्राप्तम् । नानवधारणात् नेदमवधार्यते चतुर्विंशतिर्जातय इति
किन्तू[2]दाहरणानां भेदः कथमवगम्यते । तथाहि प्रकरणसमैका
चतुर्द्धा भिन्नेति । अथ सामान्यतोऽभिन्ना जातय इत्यभेदं ब्रूयात्
तस्याप्यभ्युपगतं चतुर्दशत्वं निवर्तते । अथ कुतश्चिद्भेदाद्भेदः चदेस्सं
तर्हि उत्कर्षसमाद्या न विकल्पसमातो भिद्यन्त इति यथा येनचिद्भे-

(१) जातीनां—पा॰ ४ पु॰ । (२) अपि तू—पा॰ ९ पु॰ ।

देन चतुर्दशत्वं तथा केनचिद्भेदेन चतुर्दशत्वं तथा केनचिद्भेदेन चतुर्विंशतित्वम् (?) अविशेषसमा त्वियं जातिः उत्कर्षसमादीनामेकत्वं किञ्चित्साधर्म्यादिति। अस्या जातेरुक्तमुत्तरम्॥

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वाद्-प्राप्त्यसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ॥ ७॥

तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते यदि तावदयं हेतुः साध्यं सम्प्राप्नोति प्राप्त्या अविशिष्टः। कोऽविशेषार्थः उभयोर्विद्यमानता नाविद्यमानः सम्प्राप्यत इति हेतोः साधनार्थो हीयते। अथ न प्राप्यते अप्राप्तेन हेतुना अविशिष्टत्वादहेतुर्भवति न ह्यग्निरप्राप्तो दहति प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः। अनयोर्भेदेनोपन्यासो विवक्षातः भेदविवक्षायां प्राप्त्यप्राप्तिसमाविति अभेदविवक्षायामेकमेवोत्तरम् यथा वृक्षा वनमिति। जातिलक्षणाभावान्नैवेयं जातिरिति चेत् अथ मन्यसे यज्जातेर्लक्षणं तदस्या नास्ति साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति हि तत्। न च लक्षणेनासम्बद्धा जातिरिति शक्यं वक्तुम् न हि गोलक्षणहीनोऽन्यो गौरिति। न सूत्रार्थापरिज्ञानात्। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरित्यस्य सूत्रस्यार्थो न व्यज्ञायीत्यनुत्तरमेतत्। एतेन चैकाक्षसमाद्याः प्रत्युक्ताः सूत्रार्थापरिज्ञानात्॥

घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारा[१]दप्रतिषेधः॥ ८॥

---

(१) चाव्यभिचारादित्यपि क्वचित्।

मृत्पिण्डप्राप्तानां दण्डादीनां नाविशेषो न च साध्यसाधनभाव-निवृत्तिः न हि मृत्पिण्डप्राप्तो दण्डः साधनत्वं जहाति नापीतरत् साध्यत्वं जहाति। अथ मन्यसे घटस्य साध्यस्य चाविद्यमानस्य किं साधनेन। नाविद्यमानस्य साधनमपि तु मृत्पिण्डो घटीक्रियत इति। किमिदं घटीक्रियत इति मृदवयवाः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते व्यूहान्तराच्च घटोत्पत्तिः। पीडने चाभिचाराद्-प्राप्यापि साधकत्वं दृष्टम्। कोऽप्राप्त्यर्थः। परस्परोपश्लेषमन्तरेण साधकत्वम्। अन्यथा तूद्देशेनायं प्राप्त एव नियमात् इयं च जातिः सर्वहेत्वपवाददारिका। यदि ज्ञापको हेतुरपदिश्यते तथापि। अथापि कारकस्तथापीति। सा चेयं कार्यकारणत्वापवाददारेण प्रव-र्तमाना व्याहता भवति। को व्याघातः उत्तरस्यानुत्थानम्। कथ-मिति यदिदमुत्तरं प्राप्यार्थं कारणत्वापवाददारेण साधयेदप्राप्य वेति तस्यापि प्रतिषेध्यं प्राप्य वाऽप्राप्य वेति समो दोषः॥

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रति-दृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ॥ ९॥**

यथा तस्मिन्नेव हेतौ घटादिसाधर्म्येण कृते इत्यं घट एव तावदनित्य इत्यत्र को हेतुरिति प्रसङ्गसमः। प्रतिदृष्टान्तसमस्तु यदेव भाष्य उदाहरणं तदेव द्रष्टव्यमिति। वाय्वाकाशसंयोगस्या-कारणत्वादयुक्तमिति चेत्। अथ मन्यसे न वाय्वाकाशसंयोगः क्रियाकारणं विस्मपि कालेऽसम्भवात्। न वाय्वाकाशसंयोगेनाकाश-

क्रिया हता न करोति न करिष्यतीति यच्च त्रिष्वपि कालेष्वकारणं तदकारणम् यथा घटो घटान्तरस्य । न तत्समानधर्मोपपत्तेः । न ब्रूमो वाय्वाकाशसंयोग एव कारणमपि तु तथाभूतधर्मोऽन्यत्र दृष्टो यथा वायुवनस्पतिसंयोग इति । यस्त्वसौ तथाभूतः क्रियां न करोति तत्राकारणत्वादपि तु प्रतिबन्धात् केनास्य प्रतिबन्धः । महत्परिमाणेन यथा मन्दवातवेगेन गुरूणां लोष्टादीनामिति । यदि च क्रियां दृष्ट्वा क्रियाकरणमिति मन्यसे सर्वं कारणं क्रियानुमेयं भवतः प्राप्तं ततश्चोपादानं कारणस्य न प्राप्नोति किमिदं करिष्यत्याहो न करिष्यतीति यस्य पुनः साधर्म्यादुपादानं तस्य युक्तम् यदि च तत्सदृशं न कारणमिति मन्यसे अनैकान्तिको हेतुर्न प्राप्नोति न हि यच्छब्दे ऽमूर्तत्वं तदाकाशादाविति अनुमानं चान्यत्र दृष्टस्यान्यत्र सादृश्यादेव प्रवर्तते न हि ये धूमधर्मा एकस्मिन् धूमे त एव धूमान्तरेष्वपीति ॥

## प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः ॥१०॥

इदं तावदयं प्रष्टव्यः के प्रदीपमुपाददते किमर्थं चेति । दिदृक्षमाणा दृश्यदर्शनार्थमिति । अथ प्रदीपोपलब्ध्यर्थं कस्मान्न प्रदीपोपादानं कुर्वते । अन्तरेण प्रदीपो दृश्यते प्रदीपान्तरमिति । अथ दृष्टान्तः किमर्थमुपादीयते अज्ञातस्य प्रज्ञापनार्थम् । अथ दृष्टान्ते दृष्टान्तः किमर्थं देश्यते यदि प्रज्ञापनार्थं नाप्रज्ञातो दृष्टान्त इति । यत्पुनराकाशदृष्टान्तवदिति ॥

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥

अभ्युपगमात् प्रतिदृष्टान्तस्य च हेतुभावं प्रतिपद्यमानेन दृष्टान्तस्यापि हेतुभावोऽभ्युपगन्तव्यः हेतुभावस्य साधकत्वं स च कथमहेतुर्न स्यात् । यद्यप्रतिषिद्धः साधकः स्यात् अप्रतिषिद्धश्चायं साधकः प्रयोगानुपपत्तेश्च । यदि तावदेवं प्रयुङ्क्ते यथा भवदीयो दृष्टान्तस्तथा मदीय इति अभ्युपगमाच्च प्रतिदृष्टान्तः । अथैवं प्रयुङ्क्ते यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति तथापि व्याघातान्न प्रतिदृष्टान्त इति ॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् घटवदिति कृते यदि ब्रूयात् प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति तदभावादनुत्पत्तिधर्मकः अनुत्पत्तिधर्मकत्वाच्च नित्य इति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

यथैव प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति तथा शब्दोऽपीति उत्पन्नः सन् शब्द इति भवति उत्पन्नः सन्नुत्पत्तिधर्मक इति भवति तथाऽनित्य इति । उत्पन्ने उत्पत्तिधर्मकत्वमस्तीति न कारणप्रतिषेधः अनुत्पन्नस्य चातथाभावात् न चायमनुत्पन्नः शब्द इति वा उत्पत्तिधर्मक इति वा अनित्य इति वा व्यपदेष्टुं शक्यत इति ।

ज्ञापकश्चायं हेतुर्न कारकः ज्ञापके च कारकवत् प्रत्यवस्थानमसमञ्जसम्। न कारकज्ञापकयोर्भेदोऽस्ति कारकत्वादिति चेत्। न कारकज्ञापकयोः क्रियाज्ञप्तिहेतुत्वात्। योऽप्ययं ज्ञापकः सोऽपि किञ्चित् कुर्वन् ज्ञापक इत्युच्यते कारकोपीति[1]। नैष दोषः कारकस्य क्रियाहेतुत्वात् ज्ञप्तिहेतुत्वाद् ज्ञापकस्येति। तत्रैको वस्तु निष्पादयति एकस्तु विद्यमाने वस्तुनि ज्ञप्तिं करोति प्राक्चोत्पत्तेरुत्पत्तिधर्मकत्वस्याभावादनुत्पत्तिधर्मकः शब्द इति ब्रुवाणः शब्दमभ्युपैति नासतोऽनुत्पत्तिधर्मकत्वं धर्म इति। ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति अपरे तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयमिति। प्रागुत्पत्तेः प्रयत्नानन्तरीयकत्वस्याभावादर्थादप्रयत्नानन्तरीयकोऽप्रयत्नानन्तरीयकत्वाच्च नित्य इति कृते उत्तरं ब्रुवते नायं नियमो प्रयत्नानन्तरीयकं[2] नित्यमिति। त्रयी हि तस्य गतिः किञ्चिन्नित्यमाकाशादि किञ्चिदनित्यं विद्युदादि किञ्चिदसदेव आकाशकुसुमादि। एतत्तु न युक्तमुत्पश्यामः कथमिति यत्तावदसदप्रयत्नानान्तरीयकमिति न युक्तं प्रयत्नानन्तरीयकत्वस्य जन्मविशेषणत्वात् यस्य न प्रयत्नानन्तरं जन्म तदप्रयत्नानन्तारीयकं न चाभावो विद्यते अतो न तस्य जन्म यच्चासत् किं तस्य विशेष्यमस्ति। एतेन नित्यं प्रत्युक्तम्। न हि नित्यमप्रयत्नानन्तरीयकमिति शक्यं वक्तुम्। जातिलक्षणाभावान्नेयं जातिरिति चेत् नानुत्पन्नैरहेतुभिः साम्यात् योनुत्पन्नः स न हेतुः तद्यथा अनुत्पन्नास्तन्तवो न पटस्य कारणमिति॥

(१) कारकत्वाद्विति—पा० ६ पु०। (२) प्रागुत्पन्नः—इत्यधिकम् ६ पु०।

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १४ ॥**

उदाहरणं भाष्ये। संशयसमा साधर्म्यसमातो न भिद्यते इति चेत् अथ मन्यसे यथा साधर्म्यसमोदाहरणं साधर्म्यात् प्रवर्तते तथा संशयसमापीति अतोऽभेदान्न जात्यन्तरमिति। न उभयैकसाधर्म्यभेदात् उभयसाधर्म्यात् संशयसमः एकसाधर्म्यात् साधर्म्यसम इति विशेषः ॥

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥**

साधर्म्यात् साधर्म्यदर्शनात् संशयः वैधर्म्याद्विशेषदर्शनाच्च संशयः उभयथा तु[१] संशये सामान्यविशेषदर्शने सति संशयेऽत्यन्त[२]संशयप्रसङ्गो नित्यं सामान्यं संशयं करोतीति तु न प्रतिपद्यामहे सति सामान्ये विशेषदर्शनाद्व्यावृत्तेरिति ॥

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥**

उदाहरणं भाष्ये। संशयसमासाधर्म्यसमाभ्यां प्रकरणसमा न भिद्यते कथमिति तथापि साधर्म्यमिष्यतीति। न उभयपक्षसाधर्म्याद् भेदसिद्धेः उभावपि वादिप्रतिवादिनौ पक्षपरिग्रहेण नित्यानित्यत्वे साधयतः न चैवं साधर्म्यसमसंशयसमयोरिति ॥

---

(१) उभयथा संयोगिनि—पा० ४ पु०। (२) संशय इत्यत्र—पा० ६ पु०।

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः[१] ॥ १७ ॥**

विरुद्धाव्यभिचार्यैव उक्तोत्तर इति। प्रकरणोत्थानं च न प्रतिपक्षादिति ब्रूमः किन्तु तत्त्वादर्शनात्[२] तदुक्तं प्रकरणसमे हेत्वाभास इति ॥

**त्रैकाल्यासिद्धे[३]र्हेतोरहेतुसमः ॥ १८ ॥**

अहेतुसाम्यात् प्रत्यवस्थानमहेतुसम इति ॥

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥**

विरोधः सूत्रार्थः। नोत्पद्यमानमहेतुत उत्पद्यते नापि ज्ञाप्यमानमहेतुना ज्ञाप्यत इति ॥

**प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥**

विरोध उत्तरदोष इति। यस्मिन्नपि कालेषु न साधयति स न प्रतिषेधे ऽपि हेतुरिति समानो दोषः। उक्तोत्तरत्वाच्च प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्यत्रोक्तोत्तरमेतदिति ॥

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥**

उदाहरणं भाष्ये ॥

---

(१) प्रतिपक्षोपपत्तेः—पा० १ पु० । (२) तथा दर्शनात्—पा० १ पु० ।
(३) त्रैकाल्यानुपपत्तेरिति न्यायसूचीनिबन्धे ।

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥**

अनुपपाद्यसामर्थ्यमर्थादापद्यत इति ब्रुवाणः पक्षं हापयति । किं कारणम् सामर्थ्यस्यानुक्तत्वात् । एवं च पक्षहानेरुपपत्तिः । अनैकान्तिकत्वाच्चार्थापत्तेः[१] पूर्वसूत्रव्याघातः । यदुक्तं नानैकान्तिकत्वमनर्थापत्तावर्थापत्त्यभिमानादिति तद्व्याहन्यते[२] नास्ति व्याघातः सन्निधिविशिष्टाया अनैकान्तिकत्वाभ्युपगमात् । येयं सूत्रेणोपात्ता सानैकान्तिकी नार्थापत्तिमात्रं यथानुमानं व्यभिचारि यत् तदप्रमाणं नेतरदिति तथेहापीति ॥

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥**

उदाहरणं भाष्ये । साधर्म्यसमातो न भिद्यते अविशेषसमः कस्मात् साधर्म्यमात्रात् । प्रवृत्तेरविशेषादिति चेत् । न एकधर्मत्वभेदाद्भेदः एकसाधर्म्यात् साधर्म्यसमा समस्तसाधर्म्याद्विशेषसमेति ॥

**क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः[३] प्रतिषेधाभावः ॥ २४ ॥**

---

(१) चानुपपत्तेः—पा० ६ पु० । (२) नुपपत्तिरिति—पा० ५ पु० ।
(३) तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः—पा० ६ पु० ।

क्वचित् साधर्म्यमुपलभ्यते क्वचिन्नेति सूत्रार्थः। अभ्युपगमाच्च विरोधः सर्वभावानामनित्यत्वं प्रसञ्जयता अभ्यनुज्ञातं शब्दस्यानित्यत्वं व्यर्थं वा सर्वभावग्रहणमिति। उक्तश्च विशेषोऽन्वयव्यतिरेकसम्पन्नो हेतुर्नोत्तर इति॥

## उभयकारणोपपत्तेरुपपत्तिसमः॥ २५॥

उदाहरणं भाष्ये। उपपत्तिसमा प्रकरणसमातो न भिद्यत इति तत्रापि नित्यानित्यकारणोपपत्तिरिहापीति। न नित्यानित्यकारणस्यैकत्रोपपत्तेः। नित्यकारणं चानित्यकारणं चैकत्रोपपद्यत इत्युपपत्तिसमः नित्यानित्यपक्षाभ्यां प्रत्यवस्थानात् प्रकरणसम इति भेदः॥

## उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः॥ २६॥

विरोधः सूत्रार्थः। नित्यत्वकारण(१)मप्यस्योपपद्यत इति ब्रुवताभ्यनुज्ञातम् अनित्यत्वकारणमिति तथा च विरोधादुत्तरपक्षोत्थानं न युक्तम्॥

## निर्दिष्टकारणाभावे ऽप्युपलम्भादुपलब्धिसमः॥२७॥

उदाहरणं भाष्ये। सर्वसाध्याध्यारोपेणाव्यापकत्वं साधनस्येत्युपलब्धिसमार्थः। सर्वमनित्यं सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वेनाध्यारोप्याव्यापकत्वं हेतोः न ह्ययं हेतुः सर्वस्मिन्ननित्ये ह्यणु-

---

(१) नित्यानित्यकारण—पा॰ ९ पु॰।

कादौ विद्यत इति । श्रूयमाणप्रतिज्ञार्थाव्यापकत्वं[1] वा । यथा-ऽनित्यः शब्दः शब्दान्तरोत्पादकत्वादिति न शब्दान्तरोत्पादकत्वेन सर्वः शब्दो व्याप्यते । न ह्यन्त्यः शब्दः शब्दान्तरं करोति ॥

## कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

अनित्यः शब्द इति ब्रुवता न साध्यान्तराणां कारणान्तरं प्रति-षिध्यते न साध्यस्य कारणान्तरमिति । अपरे तु परिहारान्तरं ब्रुवते यदेव प्रयत्नानन्तरीयकं तदेव तस्मादनित्यमिति । एतत्तु नावि-वादात् । यः प्रयत्नानन्तरीयकत्वं प्रतिपद्यते न तं प्रति किञ्चित् साध्यते यदा तु प्रयत्नानन्तरीयकत्वं वस्तुविशेषणं तदान्यो हेतु र्वक्तव्यः । जातिलक्षणाभावान्नेयं जातिः । न ह्यहेतुसाम्याज्जातिः ॥

## तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्ते-रनुपलब्धिसमः ॥ २९ ॥

उदाहरणं भाष्ये । न उक्तोत्तरत्वात् । द्वितीयाध्याये उक्तोत्तर-मेतत् ॥

## अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

आवरणाद्यसम्भवे ऽसत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति प्रयोगः । एवं च सति न हेत्वन्तरं नानैकान्तिकं विपक्षाद्वृत्तित्वात् । आवर-णाद्यसम्भवे सत्त्वाभ्युपगमे विपर्ययसाध्यभिचाराज्ञायापत्तिसमेति ॥

---

(१) प्रतिज्ञार्थं—पा० ४ पु० ।

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥

साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गाद-नित्यसमः ॥ ३२ ॥

सर्वमनित्यं प्राप्नोतीत्युदाहरणं भाष्ये। अविशेषसमातो अनित्यसमा न भिद्यते तत्रापि सर्वाविशेष इष्टापीति। भिद्यते तत्र सर्वाविशेष इह सर्वानित्यत्वमिति ॥

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाम-र्थ्यात्[1] ॥ ३३ ॥

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥

प्रतिषेध्येन पक्षेण प्रतिषेधस्य प्रतिज्ञादियोगः सामान्यम्। तद्यदि वादिप्रतिषेध्यस्यानित्यत्वस्यासिद्धिर्घटादिसाधर्म्यात् ननु प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन प्रतिज्ञादियोगसामान्यादिति नेयं साधर्म्यमात्रात् स्थापना अपि तु दृष्टान्ते विशिष्टमन्वयव्यतिरेकिणं धर्म[2]-मुपलभ्य तत्सामर्थ्यात्। न च प्रतिपक्षस्यैवंभूतो धर्म उपपद्यते। तस्मात् प्रतिषेधो नोपपद्यते। उक्तं चात्र क्वचित् तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभाव इति। यथाविशेषसम उत्तरं तदि-

(१) साधर्म्यात्—पा० ५ पु०। (२) व्यतिरेकिलक्षणं धर्म—पा० ६ पु०।

स्यापि दूषणम् । नासाधनादिति चेत् । अथ मन्यसे न मया सर्वस्यानित्यत्वप्रसङ्गेन सर्वस्यानित्यत्वं साध्यते अपि त्वेवं ब्रुवाणस्य सर्वस्यानित्यत्वं प्राप्नोतीति प्रसङ्गः क्रियते । न विशेषहेत्वुपपत्तेः । न मया साध्यसाधर्म्यमात्रेण साधनमुच्यते इत्यतो न सर्वानित्यत्वप्रसङ्गः सर्वानित्यत्वसाधने प्रमाणाभावाच्च न सर्वानित्यत्वप्रसाधकं प्रमाणमस्तीति अथ सर्वमनित्यं सत्त्वादिति साधयेत् तस्यापि नान्वयो न व्यतिरेकः ॥

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्ते[1]र्नित्यसमः ॥ ३५ ॥**

अनित्यः शब्द इत्येतस्यां प्रतिज्ञायां प्रतिज्ञादिदोषोद्भावनद्वारिका जातिः अनित्यः शब्द इत्यभिदधान एव भवान् शब्दस्य नित्यत्वं प्रतिजानीते कथमिति यदनित्यत्वं तत्[2] किं शब्दे नित्यमस्ति उत कदाचिद्भवतीति । यदि नित्यं धर्मनित्यत्वाद्धर्मिणोऽपि नित्यत्वम् । अथानित्यमनित्यत्वस्याभावान्नित्यः शब्द इति ॥

**प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥**

प्रतिषेध्ये नित्यमनित्यत्वमिति ब्रुवताऽभ्यनुज्ञातमनित्यत्वम् अभ्यनुज्ञानाच्चासमर्थः प्रतिषेध इति । अथ नाभ्यनुज्ञायते नित्यमनित्यभावान्नित्यः शब्द इति हेतुर्नोपपद्यते हेत्वनुपपत्तेरनर्थकः प्रति-

---

(१) नित्यत्वापत्तेः—पा० ९ पु० । (२) यत् तदनित्यत्वं—पा० ९ पु० ।

षेधः । प्रश्नानुपपत्तिश्च पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमात् । अपि चानात्यन्तिकसत्तायोगोऽनित्यत्वमित्युक्ते न युक्तः प्रश्नः किमयमत्यन्तं भवति उत नात्यन्तमिति । आत्यन्तिकानात्यन्तिकभावयोगश्चैकस्य न युक्तः । अनित्यता नित्येति ब्रुवता एकस्यात्यन्तिकसत्तायोगो ऽनात्यन्तिकयोगश्चाभ्यनुज्ञायते स चायं विरोधान्न युक्त इति । प्रतिषेध्यदोषोद्भावनाद्युक्त इति चेत् अथ मन्यसे न मयैकस्य नित्यत्वमनित्यत्वं चाभ्युपगम्यते अपि त्वनित्यः शब्द इति ब्रुवाणस्य भवतः स एव दोष इति । न विकल्पानुपपत्तेः । नायं पक्षदोषो न साधनदोषः पक्षदोषस्तावदयं न भवति पक्षस्य तादवस्थ्यात् । न साधनस्य प्रतिज्ञादिदोषाणामनुद्भावनात् विरोधस्य चोक्तोत्तरत्वादिति ॥

## प्रयत्नकार्यानेकत्वात् कार्यसमः ॥ ३७ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिः कार्यसमा प्रयुज्यते प्रयत्नकार्यमनेकधा दृष्टमिति किञ्चित् प्रयत्नानन्तरं व्यज्यते किञ्चित् प्रयत्नानन्तरमुत्पद्यते प्रयत्नानन्तरमुपलब्धेर्हेतुत्वाध्यारोपेणानैकान्तिकदेशनात् कार्यसमः कार्यः शब्दः प्रयत्नानन्तरमुपलब्धेरिति हेतुमनैकान्तिकं चोदयति । प्रयत्नानन्तरमुपलभ्यमानं कार्यमकार्यं च दृष्टमिति । अथ प्रयत्नानन्तरं जन्म हेत्वर्थः तथाप्यसिद्धदेशनेति ॥

## कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

यत् खलु प्रयत्नेन व्यज्यते तत्रानुपलब्धिकारणमुपपद्यते न तु शब्दस्यानुपलब्धिकारणं किञ्चिदस्ति तस्मान्न व्यज्यते इति । संशय-

समातो न भिद्यत इति चेत् । उभयसाधर्म्यात् संशयसमः अयं तु न तथा तस्माद्भिद्यत इति । अथ साधर्म्यसमातो न भिद्यत इति चेत् । न हेत्वध्यारोपणात् । साधर्म्यसमा न हेत्वध्यारोपेण प्रवर्वते इयं त्वन्यथाभिहिते हेतौ अन्यथाकारं प्रवर्तते ॥

एवं जातयो व्यवस्थिताः । अथेदानीं षट्पक्षीमुपन्यस्यन्निद-माह ।

## प्रतिषेधे विप्रतिषेधे ऽपि[1] समानो दोषः ॥ ३९ ॥

प्रथमपक्षवादी जातिवादिनमुत्तरं ब्रवीति । यद्यनैकान्तिकत्वा-द्हेतुः प्रतिषेधोप्यनैकान्तिकः कस्यचिदप्रतिषेधात् कस्यचित्प्रतिषे-धादिति । विशेषहेत्वभावो वा अविशेषः । शेषं भाष्ये ॥

## सर्वत्रैवम् ॥ ४० ॥

सर्वासु जातिष्वेषा प्रयुक्तिरिति सूत्रार्थः ॥

## प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

तृतीयः पक्षो विप्रतिषेधः । एतस्मिन् विप्रतिषेधे समानमनै-कान्तिकत्वं दोष इति चतुर्थः पक्षः ॥

## प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

---

(१) प्रतिषेधे ऽपि समानो दोषः—पा॰ न्यायसूचीनिबन्धे ।

प्रतिषेधं द्वितीयपक्षं सदोषमभ्युपेत्य तृतीयपक्षे ऽपि प्रतिषेधे तुल्यदोषतामासञ्जयन् विप्रतिषेधे ऽपि समानो दोष इति ब्रुवन् मतमनुजानाति[१] सेयं मतानुज्ञा भवतीति पञ्चमः पक्षः ॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥ ४३ ॥

स्वपक्षसमुत्थानं दोषमभ्युपेत्य परपक्षे ऽपि प्रयुञ्जन्[२] स्वपक्षदोषमनुजानातीति तुल्या मतानुज्ञा । शेषं भाष्ये । अत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमाः पक्षाः । प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठाः पक्षाः । तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् न पुनरुक्तदोषप्रसङ्गः । समानः तृतीयपञ्चमयोः पुनरुक्तदोषः । तत्र पञ्चमषष्ठयोः पुनरुक्तदोषः तृतीयचतुर्थयोर्मतानुज्ञादोषः प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिरयुक्तत्ववादित्वात् । यदानुपलब्धिकारणाभावे सति प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते तदा न षट्पक्षी प्रवर्तते । एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्तीति भेदमात्रमाचासामुक्तमिति ॥

इति-श्रीउद्योतकरे न्यायवार्त्तिके पञ्चमस्याध्यायस्याद्यमाह्निकम् ॥

---

(१) तमनुजानाति—पा० १ पु० ।　　(२) प्रयुञ्जयन्—पा० १ ।

ॐ नमः परमात्मने ।



न्यायवार्त्तिके

## पञ्चमे ऽध्याये

### द्वितीयमाह्निकम् ।



**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥**

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तम् तदिदानीं विभजनीयम् । निग्रहस्थानानि तु पराजयवस्तूनि अपराधाधिकरणानि । सामान्यतो द्वे निग्रहस्थाने । कर्तृकर्मकरणानां कस्य । तत्रैके वर्णयन्ति पक्षस्येति । एवं चाहुर्दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानि । एभिरंशैः परपक्षो दूष्यत इति । एतत्तु न सम्यक् कर्मणस्तादवस्थ्यात् न हि दूषणाभि-

धानेन कर्मणोऽन्यथात्वं भवति यथाभूत एवार्थो दृश्यमाणस्तथाभूत एवादृश्यमाणोऽपि। न करणस्य विषयान्तरे ऽसामर्थ्यात्। साधनमपि प्रतिज्ञादिकं न दूष्यते[१] विषयान्तरे ऽसामर्थ्यात्। न हि किञ्चित्साधनं यद्विषयान्तरे समर्थं स्यात् सर्वं साधनं स्वविषये समर्थमिति। तस्मादसमर्थयोः कर्मकरणयोरुपादानात् कर्तुर्निग्रह इति। यत् कर्म क्रियार्थमुपादीयमानमभीष्टक्रियां न निर्वर्तयति तदिदमसमर्थं यथा सिकता घटादिकरण इति। यत् करणं क्रियार्थमुपादीयमानं क्रियां न निर्वर्तयति तदसमर्थं यथा तुर्यादि घटे। स्वविषये तूभयं समर्थम्। तदन्यविषयस्य च कर्मणो ऽन्यविषयस्य च करणस्यान्यथोपादानात्[२] कर्तुरज्ञानम्। अज्ञानं पुनरप्रतिपत्तिर्विप्रतिपत्तिर्वेति कर्ता निगृह्यते न कर्मकरणे पारतन्त्र्यात्। तस्मात् स्वतन्त्रस्य कर्तुर्निग्रह इति। विप्रतिपत्त्यप्रतिपत्त्योश्च पुरुषधर्मत्वात् पुरुषस्येति। विप्रतिपत्त्यप्रतिपत्ती च पुरुषस्य वचनद्वारेण गम्येते तस्मात् प्रतिज्ञादिदोषा इति भक्तिः[३]। कानिचिन्निग्रहस्थानान्यज्ञानादीनि पुरुषधर्मा एव। द्वैविध्यानुपपत्तिरनेकाभिधानादिति चेत्। अनेकं निग्रहस्थानं प्रतिज्ञाहान्यादिसूत्रे पठ्यते तस्माद्द्वे निग्रहस्थाने इत्ययुक्तम्। न सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेः। सामान्यमधिकृत्य निग्रहस्थाने द्वे भेदविस्तरविवक्षायां तु द्वाविंशतिधा भेदः उदाहरणमात्रत्वाच्च भेदस्यानन्त्यमिति। प्रायेण प्रतिज्ञाद्यवयवाश्रयाणीति भाष्यम्। वक्तृविषय-

(१) न दूष्यमिति—पा० ६ पु०।  (२) पपादनात्—पा० ६ पु०।
(३) भक्तिः—पा० ६ पु०।

कत्वात् प्रतिज्ञाद्यवयवाश्रितत्वमनुपपन्नमिति चेत् । अथ मन्यसे विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमित्यभिधाने प्रतिज्ञाद्यवयवाश्रितत्वे कः प्रसङ्ग इति । न क्रियावचनदोषद्वारेण कर्तृवक्तृणामज्ञत्वोपपत्तेः । क्रियाद्वारेण कर्ता दूष्यते वचनद्वारेण वक्तेति न प्रतिज्ञाद्याश्रयत्वमनुपपन्नम् । न चाधाराधेयभाव आश्रयाश्रयिभावो विवक्षितः । किं तु प्रतिज्ञादिमुखेनोद्भावनमिति । तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्त इति भाष्यम् । तत्त्ववादिनो निग्रहस्थानानुपपत्तिः प्रतिपादकत्वात् तत्त्वं ब्रवीतीति प्रतिपादयति प्रतिपादयंश्च निगृह्यत इति न युक्तम् । न परापदिष्टदूषणदोषानवबोधद्वारेण तदुपपत्तेः । तत्त्ववादी प्रथमपक्षे द्वितीयपक्षवादिना च यो दूषणाभास उक्तस्तस्य तत्त्वानवबोधान्निगृह्यते तत्त्वमभिदधानोऽपि तत्र वस्तु निर्णीतं निर्णीते च वस्तुनि दूषणाभासस्याप्रतिपत्त्या निगृह्यत इति । तत्रोदाहरणभेदप्रदर्शनार्थं प्रतिज्ञाहान्यादिसूत्रम् ॥

लक्षणं च ॥

## प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वदृष्टान्ते ऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः । यथाऽनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्येकः । सामान्यमैन्द्रियकं दृष्टं नित्यं कस्मान्न तथा शब्द इति द्वितीयः । यदि सामान्यमैन्द्रियकं नित्यमिति घटोऽप्येवमस्त्विति तृतीयः । अनेन किल प्रतिदृष्टान्तधर्मं स्वदृष्टान्ते ऽभ्यनुजानाति

अभ्यनुज्ञानाच्च दृष्टान्तं जहच्चिगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते । एतत्तु न बुद्ध्यामहे कथमत्र प्रतिज्ञा हीयत इति । हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते । नित्यताप्रतिपत्तेस्त्वसिद्धता दृष्टान्तदोषो भवति । सोऽयं दृष्टान्तदोषेण साधनदोषेण वा निग्रहो न प्रतिज्ञाहानिः । दृष्टान्तं च जहत् प्रतिज्ञामपि जहातीत्युपचारेण निग्रहस्थानम् । न च प्रधानासम्भवे उपचारो लभ्यते इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः । कथं तर्हीदं सूत्रं प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति । दृष्टस्यासावन्ते व्यवस्थित इति दृष्टान्तः स्वस्यासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन स्वपक्ष एवाभिधीयते । प्रतिदृष्टान्तशब्देन च प्रतिपक्षः प्रतिपक्षस्यासौ दृष्टान्तश्चेति । एतदुक्तं भवति । परपक्षस्य यो धर्मस्तं स्वपक्ष एवानुजानातीति यथाऽनित्यः शब्द ऐन्द्रियकत्वात् द्वितीयपक्षवादिनि सामान्येन प्रत्यवस्थिते इदमाह । यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवत्विति एषा प्रतिज्ञाहानिः । प्रागनेन प्रतिज्ञातमनित्यः शब्द इति सामान्येन अनैकान्तिकत्वेन प्रत्यवस्थित इदमाह नित्य इति(१) । प्राक् प्रमाणावधारितार्थपरित्यागादिप्रतिपत्तितो निग्रहस्थानमिति । प्रसङ्गविधानादिति चेत् । अथ मन्यसे नायं पश्चादपि शब्दस्य नित्यतां प्रतिपद्यते किं तु प्रसङ्गं करोति । यदि सामान्यमैन्द्रियकं नित्यं दृष्टं शब्दोऽप्येवं भवत्विति

---

(१) नित्यः शब्द इति—पा० ९ पु० ।

प्रसङ्गं विधत्ते। यच[1] नात एव तत्प्राप्तिः। यत एवासौ हेतुदोषोद्धारे कर्तव्ये प्रसञ्जयत्यत एव निगृह्यत इति। हेतुदोषेण चरितार्थत्वाच प्रतिज्ञाहानि[2]र्निग्रहस्थानमित्यन्ये। अन्ये तु वर्णयन्ति नैवेदं निग्रहस्थानं युक्तं हेतुदोषेण चरितार्थत्वात् यस्मादैन्द्रियकत्वादित्यस्य हेतोरनैकान्तिकत्वं दोषस्तेनायं निगृह्यीत इति। नानैकान्तिकदोषपरीहारेण विप्रतिपत्तेस्तदुपपत्तेः। तथैवानैकान्तिकस्य परिहारं कुर्वाणोऽयं निगृह्यत इत्यतो ऽनैकान्तिकत्वं न निग्रहस्थानमिति॥

## प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्॥ ३॥

उदाहरणं पूर्ववत्। सर्वगतासर्वगतविकल्पेन प्रतिज्ञान्तरं करोति। असर्वगतोऽनित्यः शब्द इति तचानित्यः शब्द इति पूर्वा प्रतिज्ञा सामान्येनैन्द्रियकेण प्रतिहतो ऽसर्वगतोऽनित्यः शब्द इति प्रतिज्ञान्तरम्। तत् कथं निग्रहस्थानम्। साधनसामर्थ्यापरिज्ञानात्। अपरिज्ञाय साधनसामर्थ्यं कुर्वतोऽसर्वगतोऽनित्यः शब्द इति प्रतिज्ञा न च प्रतिज्ञा प्रतिज्ञान्तरं साधयति साधनसामर्थ्यापरिज्ञानात्। तदेतत्प्रतिज्ञान्तरं तदिदमप्रतिपत्तितो विप्रतिपत्तितो वा निग्रहस्थानमिति॥

## प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः॥ ४॥

यच प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया स प्रतिज्ञाविरोधो नाम निग्रहस्थानम्। यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणा-

---

(१) तच– पा० ६ पु०। (२) प्रतिज्ञाहानिरिति नास्ति ६ पु०।

दिति । एतेनैव प्रतिज्ञाविरोधोप्युक्तः । यत्र प्रतिज्ञा स्ववचनेन विरुध्यते यथा श्रमणा गर्भिणी । हेतुविरोधोऽपि यत्र प्रतिज्ञा हेतुना विरुध्यते यथा सर्वं पृथक् समूहे भावशब्दप्रयोगादिति । एतेन प्रतिज्ञया दृष्टान्तविरोधोऽपि वक्तव्यः । हेतोश्च दृष्टान्तादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः । परपक्षसिद्धेन गोत्वादिनानैकान्तिकदेशनाद्विरोधः । यः परपक्षसिद्धेन गोत्वादिना व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यम् । स्वपक्षानपेक्षं च तथा । यश्च स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते अनित्यः शब्द ऐन्द्रियकत्वादिति समूहसिद्धस्य गोत्वादेर्नित्यत्वविरोधाद्विरुद्धः । उभयपक्षसम्प्रतिपन्नस्त्वनैकान्तिकः यदुभयपक्षसम्प्रतिपन्नं वस्तु तथात्वेन तेनानैकान्तिकदेशनेति । दृष्टान्ताभावाश्च कस्माच्चिन्निग्रहस्थानेषु नोक्ताः हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति ॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥**

यः प्रतिज्ञातमर्थं प्रतिषेधे कृते परित्यजति स प्रतिज्ञासंन्यासो वेदितव्यः । उदाहरणं पूर्ववत् । सामान्येनानैकान्तिकत्वे हेतोः कृते ब्रूयात् कश्चैवमाहानित्यः शब्द इति एतत्साधनसामर्थ्यापरिच्छेदात्[१] विप्रतिपत्तितो निग्रहस्थानमिति ॥

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥**

---

(१) परित्यागात्—इति क्वचित् ।

उदाहरणं भाष्ये । साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनान्निग्रहस्थानमिति सामर्थ्ये वा हेत्वन्तरं व्यर्थमिति ॥

प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

उदाहरणं भाष्ये । अभ्युपगतार्थासम्बद्धत्वान्निग्रहस्थानं यदभ्युपगतं तत्सम्बद्ध[1]मन्यदसम्बद्धमुच्यत इति ॥

वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

उदाहरणं भाष्ये । साधनानुपादानान्निग्रहस्थानमेवं ब्रुवन साधनं साध्यं आनीत इति न साध्यं न साधनं चोपादत्त इति निगृह्यते ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

उदाहरणं भाष्ये । असामर्थ्यख्यापनान्निग्रहस्थानम् असामर्थ्यं[2] चाज्ञानमिति ॥

पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥

यथा दशदाडिमादि[3]वाक्यम् । निरर्थकापार्थकयोरभेद इति चेत् । अथ मन्यसे निरर्थकादपार्थकं न भिद्यते तथाप्यर्थो न गम्यत

---

(१) तत् ख्यातमिति क्वचित् ।    (२) असमर्थं वा—पा० १ पु० ।

(३) दाडिमा इति—पा० १ पु० ।

इत्याप्नोति । भिद्यत इति ब्रूमः । कथं तत्र हि वर्णानामिव तु पदान्यसम्बद्धानि । तत् कथं निग्रहस्थानम् । वाक्यादृते न विशेषावगतिरिति साधनसामर्थ्यापरिज्ञानान्निग्रहस्थानम् ॥

**अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥**

अवयवानां विपर्यासेनाभिधानं निग्रहस्थानम् । नैवमपि सिद्धेरित्येके । एके तु ब्रुवते नैतन्निग्रहस्थानमेवमपि सिद्धेरिति । समयानभ्युपगमाच्च । न च वयमेवं समयं प्रतीक्षाम इति । प्रयोगाच्च । प्रयुक्तश्चावयवव्यत्ययः सर्वशास्त्रेष्विति कस्तर्हि समय इति । तत्र तावन्नैवमपि सिद्धेरिति प्रयोगापेतशब्दवदेतत्स्यात् यथा गौरित्यस्य पदस्यार्थे गवीति[1] प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति । न च शब्दान्वाख्यानं व्यर्थम् । अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते गोशब्दात् ककुदादिमन्तमर्थम् । तथा प्रतिज्ञाद्यवयवविपर्यासेना[2]नुपूर्वीं प्रतिपद्यते आनुपूर्व्या चार्थ[3]मिति । एतत् कथम् । पूर्वं तावत् कर्मोपादीयते ततः करणम् मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति । यत्पुनरेतत् समयानभ्युपगमात् इति नायं समयोपि त्वर्थस्यानुपूर्वीं सोयमर्थस्यानुपूर्वीमन्वाचक्षाणोनाभ्यास्येय इति । यत्पुनरेतत्प्रयोगादिति । न निग्रहस्थानविषयापरिज्ञानात् । शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्ते संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयानुपूर्व्या प्रतिपादयतीति ॥

---

(१) गौरित्यस्य शब्दस्यार्थे गावीति । (२) विपर्ययेणा—पा० ६ पु० ।

(३) चानुपूर्व्याचार्थम्—पा० ६ पु० ।

## हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम् । तत् कथं निग्रहस्थानम् । न साधनाभावे साध्यसिद्धिरिति । एके तु प्रतिज्ञान्यूनं नास्तीत्याचक्षते । एतत् तु न युक्तम् । प्रतिज्ञामन्तरेण प्रयोगे विकल्पतः पर्यनुयोज्यः । यः प्रतिज्ञान्यूनवाक्यं ब्रूते किमयं निगृह्यते अथ न यदि निगृह्यते कतमं निग्रहस्थानमिति न हि हेत्वादयो न सन्तीति । न च हेत्वादिदोषाः सन्तीति निग्रहं चाभ्युपैति तस्मात् प्रतिज्ञान्यूनमेवेति । अथ न निग्रहः न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति । यत्तु ब्रवीषि सिद्धान्तपरिग्रह एव प्रतिज्ञा एतदपि न बुध्यामहे कर्मण उपादानं प्रतिज्ञा । सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति ॥

## हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानमाधिक्यात् । तच्च न दार्ढ्यादित्येके एके तु ब्रुवते नेदं निग्रहस्थानं दार्ढ्याद् दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टं यथा धूमालोकाभ्यामग्नेरिति । न दार्ढ्यार्थानभिधानात् भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते किं ब्रवीषि दार्ढ्यादिति । सुतरां प्रतिपत्तिर्दार्ढ्यमिति तदपि तादृगेव किमुक्तं भवति सुतरामिति । अथ ब्रवीषि द्वे अपि ज्ञापके । सत्यं द्वे अपि ज्ञापके । एकेनैवाभिधानात् व्यर्थमभिधानं द्वितियस्य प्रकाशिते दीपान्तरोपा-

दानवदिति। अनवस्था वा प्रकाशिते ऽपि साधनान्तरोपादाना-
दिति ॥

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥१४॥**

शब्दपुनरुक्तं अनित्यः शब्दो ऽनित्यः शब्द इति। अर्थपुनरुक्तं
अनित्यः शब्दो निरोधधर्मको ध्वान इति ॥

**अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः(१) ॥ १५ ॥**

साधनादित्येके। एके तु ब्रुवते नेदं निग्रहस्थानमसाधनात्।
न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिद्बाध्यते परप्रतिपादनार्थं च
वाक्यप्रयोगः पुनरभिधानेन सुतरामर्थं प्रतिपद्यत इति न निग्रह-
स्थानं प्रतिपादकत्वात्। सत्यं प्रतिपादयति प्रतिपादितार्थप्रतिपा-
दकत्वात् वैयर्थ्यं स्यात् वैयर्थ्यान्निग्रहस्थानं साधनविषयापरिज्ञानात्
न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ १६ ॥**

पूर्ववन्निग्रहस्थानमिति ॥

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमन-
नुभाषणम् ॥ १७ ॥**

शेषं भाष्ये। उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्।
उत्तरेणावस्थानात् उत्तरेण गुणदोषवता मूढत्वामूढत्वं(२) गम्यत इति

(१) न्यायसूचीनिबन्धे सूत्रमिदं न दृश्यते। विश्वनाथेनापि नादृतम्।
(२) चमूढत्वं गम्यते—पा॰ ९ पु॰।

किं पुनरत्वरिते नास्ति । अस्ति हि उत्तरे कश्चिदसमर्थो दृश्यते न प्रत्युच्चारणेनासौ तावता निग्रहस्थानमर्हतीति । यश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात् स्वीकारमात्रमिति । नोत्तरविषयापरिज्ञानात् । यश्चायं न प्रत्युच्चारयति निर्विषयमुत्तरं प्रसज्यते । अथोत्तरं ब्रवीति कथं नोच्चारयति तदिदं व्याहतमुच्यते नोच्चारयत्युत्तरं च ब्रवीतीति । अप्रतिज्ञानाच्च नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तरमभिधेयमपि तु यथाकथञ्चिदुत्तरं वक्तव्यम् । उत्तरं चाश्रयाभावे न युक्त[1]मिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति ॥

## अविज्ञातं चाज्ञानम् ॥ १८ ॥

स्फुटं भाष्ये । अप्रतिपत्तितो निग्रहस्थानम् ॥

## उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥

श्लोकपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति । तदप्रतिभा नाम निग्रहस्थानं मूढत्वादिति ॥

## कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥

यच्च कर्त्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विक्षेपः यथा इत्याद्यया मया श्रुतं प्रतिज्ञाय कण्ठो मे कण्ठं छिनत्तीत्येवमादि । तत् कथं निग्रहस्थानम् । अज्ञाननिगूहनार्थं तु प्रयुक्तज्ञानमेव परिहारेणाविष्करोति ॥

## स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥

(१) उत्तरं चाश्रयाभावे न युक्तम्—पा॰ १ पु॰ ।

